# कैम्पा के संग संग लेते मज़ा हम!

कैम्पा ऑरेंज फ्लेवर-
मौजमस्ती का स्वाद!




कृत्रिम स्वाद — इसमें फलों का रस या फलों का सार नहीं है।

OBM/5361



# चन्दमामा

मे– १९८५

*

## अन्तरङ्गम्



*


प्रतिकृतिमूल्यम् रू. २-००

वार्षिकं ग्राहकशुल्कम् रू. २४-००

# चन्दमामा

संस्थापकः 'चक्रपाणिः' सञ्चालकः 'नागिरेड्डी'

वर्तमानपरिस्थितौ संस्कृतज्ञानाम् अस्माकं सङ्ख्या अल्पा । तर्हि वयं किम् असहायाः ! संस्कृतस्य प्रगतिं साधयितुं न शक्नुमः ? न वयम् असहायाः। संस्कृतस्य उन्नतस्थितिम् अनेनैव चक्षुषा द्रष्टुं शक्नुमः अपि । तदर्थं अस्माभिः अस्माकं सङ्ख्यावर्धनार्थं योजनाबद्धा कार्यपद्धतिः आश्रयणीया । सम्भाषणशिक्षणादिद्वारा भाषाप्रचारार्थं विशेषप्रयत्नः करणीयः च । प्रयत्नेन सह अस्माभिः सर्वसमर्थैः अपि भाव्यम् । तदा अल्पेन अपि प्रयत्नेन बहु साधयितुं शक्नुमः वयम् ।

इतिहासं पश्यन्तु भवन्तः- शतसङ्ख्यया विद्यमानाः सैनिकाः सहस्रसङ्ख्याकां सेनां पराजितवन्तः । तथैव क्रान्तिकारिषु एकैकः अपि बहु साधयितुं शक्तः अभूत् । अत्र सर्वत्र कारणम्- तेषु एकैकः अपि सर्वसमर्थः आसीत् ।

तैः कथं तत् सामर्थ्यं प्राप्तम् ? या श्रेष्ठा परम्परा अस्ति तां स्मरन्तः प्राचीनानाम् आदर्शम् अनुसरन्तः च ते स्फूर्तिं प्राप्तवन्तः। 'अस्माकं रक्तेषु परम्परागतशौर्यं निश्चयेन प्रवहति' इति प्रमाणीकृतवन्तः। सौभाग्यवशात् श्रेष्ठा परम्परा अस्मदायत्ता अस्ति । तया वयम् अपि स्फूर्तिं प्राप्तुं शक्नुमः, यदि वयम् इच्छामः ।

सम्पुटः—२ मे-८५ सञ्चिका—२

प्रतिकृतिमूल्यम् रू. २/– वार्षिकं ग्राहकशुल्कम् रू. २४/–



## चन्दमामा प्रजल्पति



### एशियाखण्डे एव अतिसमर्थं दूरदर्शकम् (टेलिस्कोप्)

एशियाखण्डे एव अतिसमर्थं दूरदर्शकं अस्माकं देशे वालचन्दनगरे निर्मितम् अस्ति। एतस्य दैर्घ्यं १५.७ मीटरात्मकम्। विस्तारः च ८.७ मी.। उन्नतिः च १२.७ मी.। सिविल् सीनियेषन् विभागे अन्तर्गता भारतीय-खगोलविज्ञान-संस्था एतस्य २३० सें. मी. दूरदर्शकस्य उपयोगं करोति।

### शतायुः कथं भवेत् ?



दक्षिणमलेशिया देशे मुवम् नगरे ओमर् बोदान् नामकः १०६ वर्षीयः वृद्धः अस्ति। 'शतं वर्षाणि यावत् ततोऽप्यधिकं वा जीवनं न तथा कष्टाय' इति एषः अभिप्रैति। ओमरबोदान् वदति यत् 'ये दीर्घम् आयुः इच्छन्ति तैः सर्वदा सहनशीलैः भवितव्यम्, कदापि वचनभङ्गः न करणीयः, असत्यं न वक्तव्यम्, ऋणं च न स्वीकरणीयम्' इति।



### अनाथस्य युवकस्य प्रामाणिकता।

हालिवुड्प्रदेशीयः एरिक् डिवैल्ड् नामकः युवकः निर्जनप्रदेशेषु भ्रमणं बहु इच्छति स्म। एकदा सः भ्रमणसन्दर्भे अमूल्यैः आभरणैः पूर्णं स्यूतं प्राप्तवान्। सः तं आरक्षकेभ्यः समर्पितवान्। सामान्यतः १४०० जनाः 'स्यूतः मदीयः' इति वदन्तः आगतवन्तः। किन्तु तेषु कोऽपि स्ववचनं प्रमाणयितुं न शक्तवान्। अन्ते न्यायनियमानुसारं स्यूतः एरिकमहोदयेन प्राप्तः। स्यूते ३५ कोटिरूप्यकार्हाणि आभरणानि आसन्।

## भवन्तः जानन्ति वा ?

१. एशियाखण्डे अतिविशालस्य द्वीपस्य नाम किम् ?
२. स्पेन-पोर्चुगल् प्रदेशयोः प्राचीनं नाम किम् ?
३. इजरायिलदेशस्य प्रमुखस्य नौकास्थानस्य नाम किम् ?
४. सुयेज्कुल्यायाः आरम्भे अन्ते च विद्यमाने नौकास्थानयुते नगरे के ?
५. सोवियत्रशिया-अफगानिस्थानयोः सीमाप्रान्ते प्रवहन्ती नदी का ?

(उत्तराणि ६४ तमे पृष्ठे)




# समस्या परिहारः

सीतारामः कश्चन गृहस्थः। तस्य गृहस्य पार्श्वे सोमनाथः नाम अन्यः गृहस्थः आसीत्। उभौ अपि धनिकौ। किन्तु तयोः स्वभावे महान् भेदः आसीत्। सीतारामः लघुविषयान् अपि पर्वतीकरोति स्म। सोमनाथः तु आकाशः पतितः चेदपि स्वस्थः तिष्ठति स्म।

एकदा सीतारामस्य गृहे चत्वारि सुवर्ण-नाणकानि अदृश्यतां गतानि। गृहे सर्वत्र अन्वेषणं कृतं चेदपि नाणकानि न लब्धानि। अन्ते सः कोपं प्रदर्शयन् पत्नीं पुत्रं च एतद्विषये पृष्टवान्।

"भवन्तम् अपृष्ट्वा मया कदाचित् वा धनं स्वीकृतं वा?" इति प्रतिप्रश्नं पृष्टवती पत्नी।

"अहं न जानामि एव" इति पुत्रः उत्तरितवान्। अनन्तरं त्रयः अपि मिलित्वा समग्रं गृहं पुनः अपि अन्विष्टवन्तः।

अन्ते सीतारामस्य पत्नी उक्तवती- "भवान् सर्वदा धनं यत्र कुत्रापि बहिः स्थापयति। एतत् उचितं न किल? एषु दिनेषु अस्मदीया कर्मकरी सर्वाणि वस्तूनि चोरदृष्ट्या पश्यन्ती अस्ति। कदाचित् तण्डुलान् दालान् च स्वकीये आञ्चले बध्नाति। इदानीं सा न तथा विश्वासार्हा" इति।

"तात! मातुः वचनं सत्यम्। परह्यः अहम् अपि तां चोरयन्तीं दृष्टवान्" इति उक्तवान् पुत्रः।

"चौर्यं ज्ञात्वा अपि भवती तूष्णीं स्थितवती वा" इति सीतारामः पत्नीं तर्जितवान्।

"सा बहु चतुरा स्त्री। कदाचित् यदा सा वस्त्रेषु तण्डुलान् बन्धयन्ती आसीत् तदा अहं पृष्टवती- 'तण्डुलान् किमर्थं स्वीकरोति?' इति। सा असहनया उक्तवती- 'भवती एव नेतुम् उक्तवती आसीत्। अतः स्वीकृतवती। यदि भवती न इच्छति तर्हि पात्रे स्थापयामि,



इति। तस्याः वचनभङ्ग्या भीता अहं 'नयतु' इति उक्तवती'' इति।

''एवं तर्हि तस्याः चौर्यं भवती एव प्रोत्साहितवती। एवं चेत् अद्य नाणकानि नष्टानि, श्वः अन्यत् किमपि अदृश्यतां गमिष्यति'' इति सीतारामः पत्नीं तर्जितवान्।

तदा वार्तालापमध्ये प्रविशन् पुत्रः उक्तवान्- ''तात! कर्मकर्याः उपरि दोषारोपेण किं प्रयोजनम्? वस्तुतः पूर्वम् एव धनविषये जागरूकता आश्रयणीया आसीत्'' इति।

पुत्रस्य हितवचनानि श्रुत्वा सीतारामः रुद्ररूपं प्राप्तवान् इव। ''धनस्य किं महत्त्वम् इति भवतोः ज्ञानम् एव नास्ति'' इति वदन् सीतारामः पत्नीं पुत्रं च सम्यक् उच्चैः तर्जितवान्। सीतारामस्य गृहे प्रचलन्तं कोलाहलं श्रुत्वा पार्श्वगृहस्थाः सर्वे तत्र सम्मिलिताः। केचन उक्तवन्तः- ''सीतारामस्य व्यवहारः अनुचितः'' इति। अन्ये केचन तस्य पत्नीपुत्रयोः उपरि दोषारोपणं कृतवन्तः।

एतावता अपि सीतारामः न शान्तः। सः कोपकारणेन दिनद्वयं यावत् गृहे भोजनम् एव न कृतवान्। तस्य पत्नी अपि उपवासम् आचरन्ती प्रतिवेशिनीनां पुरतः पत्युः दूषण कुर्वती स्वदुःखं प्रकटितवती। अनन्तरकाले क्रमशः परिसरः शान्तः जातः। सर्वे गृहसदस्याः नाणकप्रकरणं विस्मृतवन्तः।

यदा एतत् सर्वं प्रवृत्तं तदा सोमनाथः ग्रामे न आसीत्। तदीया पत्नी तु गृहे आसीत्। एकसप्ताहानन्तरं सोमनाथः गृहं प्रत्यागतवान्।

गृहागमनस्य अनन्तरदिने एव सोमनाथस्य गृहे अपि दश सुवर्णनाणकानि अदृश्यतां गतानि। सः अपि गृहे सर्वत्र अन्विष्टवान्। तथापि नाणकानि न लब्धानि। तदा सः पत्नीं पुत्रं च एतद्विषये पृष्टवान्।

''अहं न दृष्टवती एव'' इति उक्तवती पत्नी। 'अहं न जानामि' इति पुत्रः अपि उक्तवान्। सीतारामस्य गृहे या कर्मकरी कार्यं करोति स्म सा एव सोमनाथस्य गृहे अपि कार्यं करोति स्म।

नाणकानि यदा अदृश्यतां गतानि तदा सोमनाथस्य पत्नी सीतारामस्य गृहे प्रवृत्तं चौर्यप्रकरणं स्मृतवती। सा पतिम् उक्तवती- "एतानि नाणकानि कर्मकरी एव चोरितवती स्यात्। यतः गतसप्ताहे सीतारामस्य गृहे प्रवृत्ते चौर्यप्रकरणे एतस्याः नाम श्रूयते स्म" इति।

"तदस्तु, अस्माकं गृहे तया चौर्यं क्रियमाणं भवत्या दृष्टं वा ?" इति पृष्टवान् सोमनाथः।

"तत् तु न दृष्टम्" इति उक्तवती पत्नी। "तर्हि तद्विषयं त्यजतु नाम। मया एव कुत्रापि संस्थाप्य इदानीं विस्मृतं स्यात्" इति सोमनाथः पत्नीम् उक्तवान्।

तदा तस्य पत्नी पुनः उक्तवती- "एवं चिन्तयित्वा तूष्णीं कथं स्थातुं शक्यते। कर्मकरी तर्जनीया। आवश्यकं चेत् ताडनीया अपि। तदा एव तस्याः मुखतः सत्यं निर्गच्छेत्" इति।

तदा सोमनाथः असमाधानं प्रकटयन्- "अद्यावधि अस्माकं गृहे चौर्यं न जातम्। कदापि न भवेत् अपि इति मम आशयः। यदि जातं स्यात् तर्हि मम अश्रद्धाकारणतः। अतः इतःपरं जागरूकाः भविष्यामः" इति।

"तथापि कर्मकरीम् एकवारं पृच्छामः चेत् का हानिः ?" इति पृष्टवती पत्नी।

"यदि वस्तुतः तया चौर्यं न कृतं स्यात्, तर्हि वयं पृच्छामः चेत् सा कुपिता भविष्यति। चौर्यं न कृतं चेदपि अपवादः अस्ति एव इति



चिन्तयन्ती कालान्तरे चौर्यं कुर्यात् अपि। अतः अस्माभिः एतादृशः अवकाशः कदापि न कल्पनीयः'' इति सोमनाथः उक्तवान्।

सा पुनः असमाधानं प्रकटयन्ती उक्तवती- ''दश सुवर्णनाणकानि नष्टानि चेदपि भवतः दुःखम् एव नास्ति। सीतारामं पश्यतु, चतुर्णां सुवर्णनाणकानां कृते कियत् कोलाहलं कृतवान्! गृहस्वामी नाम तथा भवेत्'' इति।

''एवं तर्हि सीतारामः किं कृतवान्? किं साधितवान्? इति जानीम'' इति वदन् सोमनाथः पत्न्या सह सीतारामस्य गृहं गतवान्।

सीतारामः सोमनाथं दृष्ट्वा पृष्टवान्- 'उपविशतु मित्र! कः विशेषः?' इति।

''विशेषः कोऽपि नास्ति। भवतः गृहे चत्वारि नाणकानि नष्टानि आसन् इति श्रुतवान्। तन्निमित्तं कोलाहलः प्रवृत्तः इत्यपि श्रुतवान्। वस्तुतः किं प्रवृत्तम्? अहं तद्दिने ग्रामे न आसम्।''

सीतारामः मन्दहासपूर्वकं गर्वेण उक्तवान् ''तद् वा? तद्दिने अहं पत्नीं पुत्रं च सम्यक् तर्जितवान्। मम कोपं दृष्ट्वा ग्रामीणाः सर्वे भीताः। मम सामर्थ्यं सर्वैः ज्ञातम्'' इति।

''तर्हि नष्टानि नाणकानि लब्धानि वा?''

''न भोः। नष्टानि नष्टानि एव'' इति खेदेन उक्तवान् सीतारामः। ''एवं वा? तर्हि कदाचित् नष्टानि नाणकानि लब्धानि चेत् मां सूचयतु। तदा भवता यथा कृतं तथा कोलाहलं कृत्वा अहम् अपि ग्रामीणान् एकत्रीकरिष्यामि। यतः मम गृहे दश नाणकानि अदृश्यतां गतानि'' इति उक्त्वा सोमनाथः पत्न्या सह स्वगृहम् आगतवान्।

पत्युः सीतारामस्य च मध्ये प्रवृत्तं सम्भाषणं श्रुत्वा सोमनाथस्य पत्नी मनःसमाधानं प्राप्तवती। ''कोलाहलकरणेन समस्यायाः परिहारः न सिध्यति।'' इति एतत् सत्यं सा ज्ञातवती।

एतदनन्तरं सोमनाथस्य गृहे कदापि चौर्यं न प्रवृत्तम्। सीतारामस्य गृहे तु तदा तदा चौर्यनिमित्तकः कोलाहलः श्रूयते स्म।






४

[भिक्षुकवेषम् आश्रितः सुबाहुः उपायेन सर्पकेतुसैन्यं प्रविष्टवान्। सर्पकेतोः सैनिकाः कुतन्त्रम् आश्रित्य वीरपुरनगरं प्रविष्टवन्तः। एतां नगरनाशिनीं वार्तां चन्द्रवर्मणे निवेदयितुं सुबाहुः राजभवनं प्रति धावितवान्। तदनन्तरं . . .]

ततः पलायितः सुबाहुः किञ्चिद्दूरं धावितवान्। अनुधावतां सर्पकेतुसैनिकानां पादध्वनिः निरन्तरं श्रूयते स्म। सुबाहुः तु परिवृत्य द्रष्टुम् अपि न शक्तवान् आसीत्। "यावच्छीघ्रं राजभवनं प्राप्तव्यम्, युवराजः चन्द्रवर्मा च अपायविषये सूचनीयः, येन च सः कालानुगुणं प्रतिक्रियां प्रदर्शयन् शत्रुजनान् पराजयेत्" इति विषये एव सुबाहोः सम्पूर्णं लक्ष्यं केन्द्रितम् आसीत्।

अनुधावन्तः जनाः समीपम् आगच्छन्तः आसन्। अत्रान्तरे सुबाहुः राजभवनस्य पुरतः विद्यमानं जलयन्त्रम् अतिक्रम्य राजभवनद्वारं प्राप्तवान्। सः रक्षकभटान् उद्दिश्य उच्चैः उक्तवान्- "अहं सुबाहुः अस्मि। अन्तः गन्तुम् अवकाशं ददतु। पृष्ठतः ये आगच्छन्तः सन्ति ते सर्पकेतुपक्षीयाः वञ्चकाः। तेषु तेषां वचनेषु वा विश्वासः मास्तु। तान् अग्रे गन्तुं मा त्यजन्तु। अस्मदीयान् सर्वान् एतद्विषये जागरयन्तु" इति।

द्वाररक्षकाः मार्गात् अपसृत्य स्थिताः।



गृहात् बहिः आगतवान् च। राजभवनस्य पुरतः राजमार्गे कोलाहलः प्रचलति स्म।

चन्द्रवर्मा धावन् चन्द्रशालां प्रविष्टवान्। तावति काले सुबाहुः अपि कष्टेन श्वासोच्छ्वासं कुर्वन् तत्र आगतवान्। उक्तवान् च- "युवराज! सर्पकेतोः सैनिकाः द्वारपालकान् वञ्चयित्वा नगरं प्रविष्टवन्तः सन्ति। झटिति- अस्मदीयान् सैनिकान् जागरयतु। त्वरित- सङ्केतेन सर्वान् अपायविषयं सूचयतु। प्रायः एतावति काले एव शत्रवः राजभवनस्य प्राङ्गणं प्रविष्टवन्तः स्युः अपि। अतः विना विलम्बेन प्रतीकारोपायः चिन्तनीयः" इति।

चन्द्रवर्मा अपायश्रवणेन क्षणकालं स्तब्धः इव। राजभवनस्य उभयपार्श्वे विद्यमानेषु भव- नेषु अग्निस्पर्शः कृतः दृष्टः। प्रकाशमानया अग्निज्वालया, अश्वानां हेषारवेण, सैनिकानां कोलाहलेन, स्त्रीणां बालकानां च आर्तनादेन च सर्वाः दिशः व्याप्ताः अभवन्।

चन्द्रवर्मा परिवृत्य सुबाहुं पश्यन् चिन्ता- पूर्णस्वरेण पृष्टवान्- "मम पिता कुत्र? तेन सह भवान् यशोवर्धनसमीपं गतवान् आसीत् किल? एषः कः कोलाहलः? किम् एतत् प्रवृत्तम्?" इति।

एतत् प्रश्नं श्रुत्वा सुबाहुः क्षणकालं मौनं स्थितवान्। किम् उत्तरं दातव्यम् इति सः न ज्ञातवान्। दुःखावेगेन पीडितः सः किमपि

सुबाहुः वेगेन धावन् राजभवनं प्रविष्टवान्।

एतावति काले समीपम् आगतान् सर्पकेतु- सैनिकान् दृष्ट्वा रक्षकभटाः खड्ग कोषात् बहिः आकृष्टवन्तः। धैर्येण तान् सम्मुखीकृतवन्तः च। एकत्र सर्पकेतुसैनिकानां रक्षकभटानां च मध्ये युद्धं प्रचलत् आसीत्। अपरत्र सुबाहुः एकश्वासेन राजभवनस्य सोपानानि आरुह्य चन्द्रवर्मणः शय्यागृहं प्राप्तवान्। "युवराज! त्वरयतु। अनिरीक्षिता महती विपत्तिः उप- स्थिता अस्ति। सर्पकेतोः जनाः नगरं प्रविष्टाः सन्ति। ते नगरं ध्वंसयन्तः सन्ति च" इति सुबाहुः उच्चैः उक्तवान्।

सुबाहोः आक्रोशनं श्रुत्वा गाढनिद्रायां निमग्नः युवराजः झटिति उत्थितवान्, शयन-




उत्तरं वक्तुम् अपि न शक्तवान् ।

"अस्याम् अपायपरिस्थितौ महाराजस्य सूर्यवर्मणः मरणवार्तानिवेदनम् अनुचितम् । पितृमरणवार्तायाः श्रवणेन कुमारः दुःखितः भवति एव । तदा शत्रुसम्मुखीकरणे कष्टम् आपतेत् । अतः सर्वप्रथमं धूर्तस्य सर्पकेतोः अनुचराणां सर्वनाशः सम्पादनीयः । अनन्तरं यथाकालं युवराजाय पितृमरणवार्ता निवेद-नीया" इति सुबाहुः निश्चितवान् ।

एवं मनसि दृढनिश्चयं कृत्वा आत्मबलेन आत्मानं निगृह्य समचित्तः सन् सुबाहुः उक्तवान्-"युवराज ! भवदीयः पिता वीरपुर-मार्गे आगच्छन् अस्ति । इदानीं पितुः विषये चिन्ता मास्तु । एषः विपत्कालः ! अतः प्रथमम् 'अत्र किं करणीयम्' इति चिन्तयतु । सर्पकेतुसैनिकाः इदानीं राजधानीं प्रविश्य भवनानि ज्वालयन्तः सन्ति । ते यदा कदापि राजभवनं प्रविशेयुः अपि" इति ।

अत्रान्तरे राजभवनम् आरोहतः कस्यचित् पादध्वनिः श्रुतः । 'शत्रवः राजभवनं प्रविष्टवन्तः वा ?' इति चिन्तयतः सुबाहोः मनः भयेन कम्पितम् । सः एकवारं दीर्घम् उत्प्लुत्य चन्द्रवर्मणः शयनगृहं प्रविष्टवान् । तत्र भित्तौ स्थितं खड्गद्वयं स्वीकृत्य बहिः आनीतवान् । एकं चन्द्रवर्मणः हस्ते दत्तवान् च ।

तदा सोपानानि आरोहतः पुरुषस्य ध्वनिः श्रुतः- 'युवराज ! युवराज !' इति । एतस्य ध्वनेः परिचयं प्राप्तवान् इव चन्द्रवर्मा उक्तवान्- "कः, सेनापतिः वा ?" इति ।

आगतः सः सेनापतिः धीरमल्लः आसीत् । सः वेगेन धावन् चन्द्रवर्मसमीपम् आगतवान्, उक्तवान् च- "युवराज ! परिस्थितिः विषमा जाता अस्ति । महाराजः यशोवर्धनः किमर्थं वैरं साधयन् अस्ति इति अहं न जानामि । तेन प्रेषिताः सैनिकाः नगरं प्रविष्टाः सन्ति । गृहाणि ज्वालयन्तः नगरं लुण्ठयन्तः सन्ति । नगरीयाः केचन तेषां साहाय्यम् आचरन्तः सन्ति इति भाति । इदानीं किं करणीयम्



अस्माभिः ? शत्रुमित्रभेदम् अपि ज्ञातुं न शक्नुमः वयम्'' इति।

'यशोवर्धनः आक्रमणार्थं सैनिकान् प्रेषितवान्' इति ज्ञात्वा चन्द्रवर्मणः शरीरे कम्पनम् आरब्धम्। सः किमपि वक्तुम् उद्युक्तः। तन्मध्ये सुबाहुः उक्तवान्- ''युवराज ! एते सैनिकाः यशोवर्धनेन प्रेषिताः न। अस्माकं नगरं प्रवेष्टुम् अस्मान् वञ्चयितुम् च सर्पकेतुना अनुसृतः उपायः एषः। अहं छद्मवेषेण तैः सह आगत्य सर्वान् विषयान् ज्ञातवान्। ये नागरिकवेषेण सैनिकानां साहाय्यं आचरन्तः सन्ति ते न नगरवासिनः। ते सर्वे राज्यस्य सीमायां निवसन्तः ग्रामीणाः। सर्पकेतुसैनिकाः धनलोभस्य आशां प्रदर्श्य तान् आनीतवन्तः'' इति।

एतां वार्तां श्रुत्वा सेनापतिः धीरमल्लः दिग्भ्रान्तः। सः युवराजम् उक्तवान्-''सुबाहु-वचनं सत्यम् एव स्यात्। सर्पकेतुः कुतन्त्रे प्रवीणः। महाराजः माहिष्मतीनगरं गतवान् अस्ति। सर्पकेतुकारणेन महाराजः अपि अपायग्रस्तः भवेत्'' इति।

तदा सुबाहुः त्वरां प्रदर्शयन् उक्तवान्- ''सेनापते ! विपत्तिः कथं निवारणीया इति विषये प्रथमं चिन्तयतु। विपत्तिं दूरीकृत्य अनन्तरं महाराजविषये चिन्तयिष्यामः। सैनिकान् एकीकृत्य शत्रवः कथं नगरात् निष्कासनीयाः इति विषये प्रथमं चिन्तयामः'' इति।

चन्द्रवर्मा सुबाहुवचनम् अङ्गीकुर्वन् शिरः चालितवान्। त्वरां प्रदर्शयन् सेनापतिम् उक्तवान् च- ''सेनापते ! राजभवनस्य सुरक्ष-णार्थं सर्वाः व्यवस्थाः करणीयाः। सैनिकाः सूचिताः वा ? का व्यवस्था कृता ?'' इति।

सेनापतिः धीरमल्लः उक्तवान्- ''युवराज ! केचन सैनिकाः यशोवर्धनस्य जयकारं कुर्वन्तः प्रासादस्य प्राङ्गणं प्रविष्टवन्तः आसन्। अस्मदीयाः सैनिकाः तान् तत्रैव निरुध्य मारितवन्तः। सुबाहुः 'ते सर्वे सर्पकेतोः सैनिकाः, यशोवर्धनस्य नामोच्चारेण वञ्चिताः मा भवन्तु' इति सूचयन् एव आगतः



आसीत्। एतेन महान् उपकारः सञ्जातः" इति।

"सेनापते! भवान् सैनिकान् एकत्रीकरोतु। कांश्चन सैनिकान् राजभवनस्य रक्षणार्थं नियोजयतु। अन्यान् सैनिकान् आत्मना सह स्वीकृत्य मार्गेषु अवतीर्य सर्पकेतुसैनिकान् मर्दयिष्यामि" इति युवराजः सेनापतिं आदिशन् उक्तवान्।

"युवराज! शत्रुनाशने मया सर्वाः व्यवस्थाः कृताः। महाराजस्य यशोवर्धनस्य जयकारं श्रुत्वा अहं सन्देहे पतितः। अतः त्वरया अत्र आगतवान्। भवान् इतःपरं निश्चिन्तः भवतु। इदानीं अग्रिमकार्यार्थम् आज्ञादानपूर्वकम् अनुगृह्णातु" इति सेनापतिः धीरमल्लः उक्तवान्।

एतावति काले शत्रुभिः नगरे बहुत्र अग्निस्पर्शः कृतः आसीत्। मृच्छदानां विस्फोटः निरन्तरं श्रूयते स्म। सर्वतः जनानां कोलाहलः आर्तनादः च श्रूयते स्म। चन्द्रवर्मा चतसृषु दिक्षु दृष्टिं प्रसारयन् अग्निना भस्मसात्क्रियमाणं नगरं व्याकुलदृष्ट्या दृष्टवान्। दृश्यं सङ्कटजनकम् आसीत्। तदीयः पिता सूर्यवर्मा तु नागरिकान् पुत्रवत् प्रीत्या पश्यति स्म। ते नागरिकाः इदानीं सङ्कटे सन्ति! दीर्घं निश्वसन् चन्द्रवर्मा सोपानमार्गेण प्राङ्गणम् आगतवान्। तत्र युद्धसन्नद्धाः सामान्यतः पञ्चशतानि पदातयः पङ्क्तौ स्थिताः आसन्। तत्पार्श्वे अश्वारोहिण सैनिकाः शूलखड्गादिसहिताः युद्धार्थं समुत्सुकाः आसन्।

चन्द्रवर्मा पञ्चाशत् पदातीन् दश अश्वारोहिणः च राजभवनस्य रक्षणार्थं नियोजितवान्। अवशिष्टान् सैनिकान् दलद्वये विभक्तवान्। एकस्य दलस्य नेतृत्वं धीरमल्लाय समर्पयन् युवराजः उक्तवान्- "सेनापते! अहं नगरद्वारस्य पूर्वदिशम् अनुसरामि। भवान् एतैः सैनिकैः सह पश्चिमदिशम् अनुसरतु। आवां द्वौ अपि शत्रुसैनिकान् नाशयन्तौ अर्धचन्द्राकारेण गच्छन्तौ उत्तरद्वारसमीपे पुनः मिलावः। यदि कदाचित् ईश्वरनिर्णयः अस्मद्योजनाविरुद्धं स्यात्, तर्हि उभौ अपि स्वतन्त्ररूपेण




कालानुगुणं निर्णयं स्वीकुर्वः'' इति ।

''यथा आज्ञापयति देवः । युवराज ! अत्युत्साहेन प्रेरितः आत्मानं अपाये न पातयतु । सर्वत्र अन्धकारः अपि व्याप्तः अस्ति । शत्रूणां सामर्थ्यम् अपि वयं सम्यक् न जानीमः । अतः सर्वदा जागरूकेण भाव्यम्'' इति धीरमल्लः उक्तवान् ।

अनन्तरम् उभौ अपि 'महाराजः सूर्यवर्मा जयतात्' इति घोषयद्भिः सैनिकैः सह राजभवनस्य सीमाम् अतिक्रम्य नगरस्य मध्यभागम् आगतवन्तौ ।

अत्रान्तरे पूर्वस्यां दिशायां अरुणोदयस्य प्रकाशः प्रसृतः । आयुधहस्तः सुबाहुः अश्वारूढं चन्द्रवर्माणं समीपे दग्धानि गृहाणि प्रदर्शयन् उक्तवान्- ''युवराज ! सर्पकेतोः कुतन्त्रम् अंशतः सफलं दृश्यते । सर्पकेतुः कुटिलतन्त्रे समर्थः स्यात् । किन्तु तस्य सेनायां प्रशिक्षिताः सैनिकाः अधिकाः न सन्ति । सैनिकेषु बहवः ग्रामवासिनः, नगरलुण्ठनार्थम् आगताः च । एतादृशैः सह युद्धं न तथा कष्टकरम् । यदि वयं कांश्चन सैनिकान् निर्दयं मारयामः तर्हि इतरे अपि भीताः सन्तः प्राणभीत्या पलायनं कुर्वन्ति'' इति ।

'एषः एव उचितः मार्गः' इति चन्द्रवर्मा चिन्तितवान् । सः स्वसैनिकान् आक्रमणार्थम् आदिष्टवान् । उच्चैः जयकारं कर्तुं सूचितवान् च । ये अग्निना गृहं ज्वालयन्तः आसन् ते सैनिकानां शूलाघातेन आर्तनादं कृतवन्तः ।

'सूर्यवर्मणः सैनिकाः समागताः' इति कोलाहलः सर्वत्र व्याप्तः । गृहज्वालने निमग्नाः दुष्टाः इदानीं स्वकार्यं त्यक्त्वा स्वेच्छाया धावितुं प्रवृत्ताः ।

'सूर्यवर्मणः सैनिकाः वा ? कुत्र सन्ति ते ? मारयन्तु तान्'' इति वदताम् अश्वारोहिणां शत्रुसैनिकानां कोलाहलः अपि तत्र तत्र श्रूयते स्म ।

'शत्रुसैनिकानां नाशार्थम् एषः उत्तमः अवकाशः' इति चन्द्रवर्मा चिन्तितवान् । अतः सैनिकानाम् अर्धभागम् मार्गस्य अन्ते रहस्यरूपेण स्थातुम् आदिष्टवान् । स्वयम् अपि जागरूकतया स्थितवान् । 'यदा शत्रवः मार्ग-

मध्ये आगच्छन्ति तदा उभयतः आक्रमणं कृत्वा शत्रवः निश्शेषं नाशनीयाः' इति चन्द्रवर्मणः योजना आसीत्।




एषा योजना फलकारिणी जाता। अपरिमितेन विजयोत्साहेन उन्मत्ताः सर्पकेतुसैनिकाः इदानीं विवेकरहिताः आसन्। राजमार्गे काचित् विपत्तिः आपतेत् इति शङ्का अपि न आसीत् तेषाम्। ते पूर्वापरम् अनालोच्य वेगेन साक्षात् राजमार्गं प्रविष्टवन्तः। मार्गस्य आदौ अन्ते च शत्रुनिरीक्षायां स्थिताः चन्द्रवर्मणः सैनिकाः इदानीम् उभयतः अपि हठात् आक्रमणं कृतवन्तः।

तदा सर्पकेतुसैनिकाः क्षणकालं स्तब्धाः। अनन्तरं ते प्राणान् रक्षितुम् इच्छन्तः पृष्ठतः धावितवन्तः। तत्रापि शूलहस्ताः चन्द्रवर्मणः सैनिकाः सन्ति एव !

सर्पकेतुसैनिकाः बहवः अल्पे एव काले मरणम् आलिङ्गितवन्तः। मार्गे सर्वत्र शवाः पतिताः। 'किं करणीयम्' इति चिन्तनात् पूर्वम् एव सर्पकेतुसैनिकाः शूलानाम् आहाराः जाताः।

एतेन जयेन चन्द्रवर्मणः सैनिकानाम् उत्साहः द्विगुणितः। आत्मविश्वासः अधिकः जातः च। ते सन्तोषेण 'महाराजः सूर्यवर्मा जयतात्' इति उच्चैः जयघोषं कृतवन्तः। राजमार्गे आगतान् शत्रून् विनायासं शूलेन खड्गेन च मारितवन्तः। वीरपुरस्य नागरिकाः शत्रुमर्दने प्रवृत्तं युवराजं दृष्ट्वा स्वयम् अपि उत्साहिताः। गृहे यत् आयुधं प्राप्तं तत् स्वीकृत्य शत्रुनाशने प्रवृत्ताः च।

पुरतः दृश्यमानान् सर्वान् शत्रुसैनिकान् मारयन् चन्द्रवर्मा उत्तरद्वारसमीपम् आगतवान्। तत्समये अन्यमार्गे प्रस्थितः सेनापतिः धीरमल्लः अपि समीपे एव दृष्टः। युद्धे धीरमल्लः अपि अपूर्वं विजयं प्राप्तवान् आसीत्। तथापि सः युवराजस्य योगक्षेमविषये चिन्तयन् उत्कण्ठया आगच्छति स्म। युवराजं दृष्ट्वा सः वेगेन तत्समीपम् आगतवान्, उक्तवान् च- ''युवराज ! नगरस्य अन्तः प्रविष्टाः सर्वे शत्रुसैनिकाः नाशिताः। इदानीम् अस्माभिः

त्वरितगत्या अन्तर्दुर्गस्य समीपं गन्तव्यम्। यतः सर्पकेतुः सेनां स्वीकृत्य स्वयम् आगतः इति श्रूयते। अतः त्वरया गच्छामः'' इति।

एषा वार्ता चन्द्रवर्मणः अनिरीक्षिता आसीत्। तस्य विजयोत्साहः क्षणकालं स्थगितः। यतः चन्द्रवर्मणः सेना व्यवस्थित-रूपेण सङ्घटिता न आसीत्। व्यूहरचनार्थं समयावकाशः अपि अपर्याप्तः आसीत्। शत्रु-सामर्थ्यं स्पष्टतया न ज्ञायते स्म। एतदतिरिच्य एतादृशयुद्धेषु चन्द्रवर्मणः विशेषानुभवः अपि न आसीत्।

एवं स्थिते अपि चन्द्रवर्मा आत्मनि धैर्यं सम्पूर्य युद्धार्थं सन्नद्धः जातः। 'इतःपरं कूटयुद्धेन प्रयोजनं न भवेत्। अतः शत्रुसेना साक्षात् सम्मुखीकरणीया' इति सः चिन्तितवान्।

धीरमल्लः पुनरपि उक्तवान्- 'शत्रुसेनायाः सङ्ख्याबलम् अधिकं दृश्यते। अस्माकम् अल्पीयसी सेना यदि स्वयम् आक्रमणं करोति तर्हि आत्महानिः एव सम्भवेत्। अतः वयं दुर्गस्य आश्रये स्थित्वा युद्धं कुर्मः। अत्रान्तरे सीमायां स्थितायाः अस्माकं सेनायाः साहाय्यम् उपलभ्येत'' इति।

चन्द्रवर्मा एतत् अङ्गीकृतवान्। झटिति अश्वं पृष्ठतः परिवर्त्य युद्धार्थं सः प्रस्थितः एव। धीरमल्लः सुबाहुः च स्वकीयम् अश्वं सम्प्रेर्य चन्द्रवर्मणः उभयपार्श्वे प्रस्थितौ। इतरे सैनिकाः तान् अनुसृतवन्तः। सर्वे महता वेगेन अन्तर्दुर्गस्य द्वारं प्रति धावितवन्तः।

मार्गे कुत्रापि तैः शत्रवः न दृष्टाः। यदा ते राजभवनसमीपम् आगतवन्तः तदा पदातयः अश्वारोहिणः च शत्रुसैनिकाः एकत्र सम्मिलिताः तैः दृष्टाः। शत्रुसैनिकेषु केचन प्रवेशद्वारम् भञ्जयितुं प्रयत्नं कुर्वन्तः आसन्। एतत् दृष्ट्वा चन्द्रवर्मा घोरं गर्जनं कुर्वन् स्वसैनिकैः सह शत्रूणाम् उपरि आक्रमणं कृतवान्।

(अनुवर्तते)






# मित्रसंस्कारः

दृढव्रती त्रिविक्रमः पुनः अपि वृक्ष-समीपम् आगतवान्। वृक्षतः शवम् अवतार्य स्वस्कन्धे आरोपितवान्। मौनं श्मशानाभिमुखं प्रस्थितः च। तदा शवान्तर्गतः वेतालः अवदत्- "अये महाराजः! सुखतल्पे शयन-योग्यः भवान् अस्मिन् अर्धरात्रे श्मशानमार्गे असाध्यकार्ये प्रवृत्तः। एतत् दृष्ट्वा मम हृदयं खिद्यति। राजा स्वकीयानि कार्याणि सर्वाणि सेवकद्वारा साधयति। किन्तु भवान् स्वयं परिश्रमं कुर्वन् अस्ति। किं साधयितुम् इच्छति भवान्? कार्ये सिद्धप्राये, सौगन्धिकादेशस्य युवराजः इव मतिभ्रान्तस्य व्यवहारं न आचरति किल? अहं तस्य युवराजस्य कथां श्रावयामि। मार्गायासपरिहारार्थं शृणोतु तावत्" इति।

अनन्तरं वेतालेन कथा आरब्धा-

सौगन्धिकादेशस्य युवराजः रूपसेनः। सः

## वेतालकथा



गुरुकुले क्रमपूर्वकं विद्याभ्यासं समाप्य राजोचितं सर्वं ज्ञानं प्राप्तवान्। ललितकलासु युवराजस्य विशेषासक्तिः आसीत्। किन्तु एकः एव दोषः यत् युवराजः सुलभकोपी। अल्पेन अपि कारणेन सः कुप्यति स्म, कोपवशात् किमपि अकार्यं करोति स्म च। पुत्रस्य एतं व्यवहारं दृष्ट्वा वृद्धः गुणसेनः पुत्रस्य भाविजीवनं चिन्तयन् व्याकुलितः अभवत्।

एकदा राजकुमारः राजोद्याने विहरन् आसीत्। तदा सः समीपतः एव सुमधुरं गीतं श्रुतवान्। यदा गीतं समाप्तं तदा सः सेवकम् आदिष्टवान् यत् गायिकाम् इदानीम् एव अत्र आनयतु इति। गायिका न अन्या, सा तु महाराज्ञ्याः प्रियसखी चन्द्रमती एव।

रूपसेनः चन्द्रमतीम् उक्तवान्- "चन्द्रमति, भवती एवं सुमधुरं गायति इति अहं न जानामि स्म। भवती एतत् गीतं स्वयं रचितवती वा?" इति।

चन्द्रमती विनयपूर्वकम् उत्तरितवती- "कदाचित् कश्चित् सङ्गीतविद्वान् गायति स्म। अहं तत् श्रुत्वा स्वयं अभ्यस्तवती" इति।

"एतादृशं सुमधुरं कोमलं च भावं यः गीते योजितवान् तम् अहं द्रष्टुम् इच्छामि" इति उक्तवान् रूपसेनः। अनन्तरदिने चन्द्रमतीद्वारा तं पण्डितम् आनायितवान् च।

रूपसेनः आचार्यं योग्यरीत्या सत्कृत्य पृष्टवान्- "आचार्य! यस्य गीतस्य एवं सुमधुरं रागं योजितवान् तत् गीतं किं भवान् स्वयं रचितवान्?" इति।

"न हि प्रभो! मम स्नेहितः कश्चित् एतत् गीतं रचितवान्। अहं केवलं रागयोजनं कृतवान्, तावदेव" इति उक्तवान् आचार्यः।

रूपसेनः कविं स्वसमीपम् आहूतवान्। उपायनैः सम्मानितवान् च। युवराजेन सत्कृतः कविः उत्तरितवान् "प्रभो! यदि एतत् गीतम् एवं सुमधुरं स्यात् तर्हि तत्र कारणं न अहम्, अपि तु मम स्नेहितः कलाकारः वसन्तमिश्रः। तेन कस्याश्चित् युवत्याः चित्रं लिखितम्। तस्य चित्रस्य लावण्यं मुखसौन्दर्यं च दृष्ट्वा व्यामुग्धः अहम् एतत् गीतं रचितवान्" इति।

तदा रूपसेनः सेवकम् आदिष्टवान् यत् चित्रेण सह एव चित्रकारः अपि आनेतव्यः इति। सेवकः तथा एव कृतवान्।

चित्रकारेण आनीतं चित्रं दृष्ट्वा रूपसेनः मन्त्रमुग्धः इव। सः चित्रकारम् पृष्टवान्- "एषा चित्रस्था सुन्दरी कुत्रापि अस्ति वा, उत भवता कल्पनया चित्रिता?" इति।

"प्रभो! चित्रस्था एषा न कल्पनया लिखिता। सुवर्णपुरस्य भूस्वामिनः प्रीतिपात्रपुत्र्याः स्वर्णमञ्जर्याः चित्रम् एतत्। अहं कदाचित् तां मन्दिरे दृष्टवान् आसम्। तस्याः सौन्दर्येण अहम् आकृष्टः। तत् सौन्दर्यं स्मरन् एतत् चित्रं लिखितवान्" इति उक्तवान् वसन्तमिश्रः।

वसन्तमिश्रस्य उत्तरेण रूपसेनः बहु सन्तुष्टः। स्वर्णमञ्जरी द्रष्टव्या इति प्रबला इच्छा तस्य हृदये उत्पन्ना। अतः सः 'सुवर्णपुरं गत्वा स्वर्णमञ्जरी आनेतव्या' इति सेवकान् आदिष्टवान्।

सेवकाः सुवर्णपुरं गत्वा प्रत्यागत्य उक्तवन्तः- "प्रभो! एकसप्ताहतः पूर्वं स्वर्णमञ्जर्याः विवाहः सम्पन्नः। अतः सा इदानीं पतिगृहे निवसति" इति।

एतां वार्तां श्रुत्वा रूपसेनः अतीव निराशः। 'एषा घटना मम अपमाननम्' इति सः चिन्तितवान्। उद्गतं कोपम् सः आत्मनि निरोद्धुं न शक्तवान्। अतः सः चन्द्रमतीं, सङ्गीताचार्यं कविं, चित्रकारं च कारागारे स्थापितवान्।





रूपसेनस्य तर्कः आसीत् यत् एतेषां कला-काराणां कारणतः एव मनसि व्याकुलता उत्पन्ना, अतः एते दण्डनार्हाः इति ।

एकं वर्षम् अतीतम् । एतदभ्यन्तरे रूपसेनः एतत् प्रकरणम् एव विस्मृतवान् । किन्तु ये तेन कारागारे स्थापिताः आसन् ते निर्दोषिणः तत्रैव कष्टम् अनुभवन्तः आसन् ।

सौगन्धिकादेशस्य पार्श्वे एव जयन्तदेशः आसीत् । तद्देशीयः राजा प्रतिवर्षं वसन्तोत्सवं सवैभवम् आचरति स्म । जयन्तदेशस्य महा-राजस्य आह्वानम् अङ्गीकृत्य रूपसेनः वसन्तोत्स-वार्थं गतवान् ।

उत्सवः अवर्णनीयः आसीत् । प्रतिदिनम् अपि विभिन्नाः कार्यक्रमाः । एकस्मिन् दिने सङ्गीतसभा आसीत् । तस्यां सभायां एका सुन्दरी युवती मधुरं गीतवती । तस्याः कण्ठ-माधुर्येण सङ्गीतपाण्डित्येन भावपूर्णमुखसौन्दर्येण च रूपसेनः आकृष्टः ।

रूपसेनः तस्याः परिचयं प्राप्तुम् इच्छां प्रकटितवान् । तदा जयन्तदेशस्य महाराजः उक्तवान्- "रूपसेन ! एषा सुन्दरी भवतः देशस्य एव । एतस्याः नाम स्वर्णमञ्जरी इति । एषा सुवर्णपुरस्य भूस्वामिनः पुत्री । एताम् अस्मद्देशीयः गायकः नवीनः परिणीतवान् । एषा न केवलं गायिका, अपि तु सद्गुणानां खनी अपि" इति ।

स्वर्णमञ्जर्याः नामश्रवणेन रूपसेनः पूर्वं प्रवृत्तं सर्वं तत्क्षणे स्मृतवान् । इदानीं तस्य असमाधानं स्वर्णमञ्जर्याः विषये केन्द्रितम् । सः क्रोधावेशेन विवशः जातः । किन्तु सा इदानीं विवाहिता स्त्री । अन्यदेशे निवसति अपि । अतः रूपसेनः किमपि कर्तुं न शक्नोति स्म । उत्पन्नः कोपः तथैव शान्तः ।

उत्सवसमाप्तेः अनन्तरं रूपसेनः 'स्वर्ण-मञ्जरी मया द्रष्टव्या' इति स्वकीयम् आशयं प्रकटीकृतवान् । एतदनुसारं स्वर्णमञ्जरी पत्या सह रूपसेनसमीपम् आगतवती । किञ्चित्-कालं यावत् तयोः मध्ये वार्तालापः प्रवृत्तः । संक्षिप्तवार्तालापेन रूपसेनस्य मनसि अद्भुतं परिवर्तनं जातम् । स्वर्णमञ्जर्याः मृदुमधुरः वार्तालापः, निष्कल्मषः व्यवहारः, प्रभावपूर्णा

कथनशैली, निर्मलः आकारः- इति एकैकम् अपि तस्याः सौन्दर्यं वर्धयति स्म ।

रूपसेनः तद्दिने एव स्वराज्यं प्रत्यागतवान् । राजधानीं प्राप्य सः सर्वप्रथमं कारागारे स्थितान् कलाकारान् बन्धमुक्तान् कृतवान् । सार्वजनिक-सभायां तेषां विशेषसम्माननं कृतवान् च ।

वेतालः एवं कथां समाप्य त्रिविक्रमम् अवदत्- "राजन् ! रूपसेनस्य एतद्विचित्र-व्यवहारस्य विषये भवान् किम् अभिप्रैति ? यां सः प्राप्तुम् इष्टवान् सा तेन न प्राप्ता । अतः एव सः वसन्तमिश्रादीन् कलाकारान् कारागारे स्थापितवान् । किन्तु यदा सः तां सुन्दरीं स्वयं दृष्टवान् तदा न केवलं कलाकारान् बन्धमुक्तान् कृतवान्, अपि तु तान् सम्मानितवान् च । रूपसेने यत् परिवर्तनं दृश्यते तत्र किं कारणम् ? मतिभ्रान्तिः एव कारणं किल ? एतस्य प्रश्नस्य समाधानं ज्ञात्वा अपि यदि भवान् न वदति तर्हि भवतः शिरः शतधा भग्नं भवेत्" इति ।

तदा त्रिविक्रमः उक्तवान्- "रूपसेनस्य हृदये सत्संस्कारः अज्ञातरूपेण निहितः आसीत् । किन्तु सः संस्कारः मेघैः आवृतः चन्द्रः इव क्रोधेन आवृतः आसीत् । यथा मेघगर्जनपूर्वकं धाराकारेण वृष्टिः भवति तथैव रूपसेनस्य कोपः अपि । कदाचित् तदीयः कोपः उत्कटावस्थां प्राप्नोति स्म । तेन च यः कश्चित् तदीयकोपस्य आहारः भवति स्म ।

यथा प्रबलः वायुः मेघान् अस्तव्यस्तान् कृत्वा तेषां शक्तिं नाशयति तथैव स्वर्णमञ्जर्याः मृदु-मधुरः व्यवहारः पावित्र्यं च रूपसेनस्य अन्तः प्रविश्य परिवर्तनम् अकरोत् । तेन क्रोधः क्षालितः अभवत् । रूपसेनः पूतः जातः । रूपसेनस्य अन्तः यत् परिवर्तनं दृश्यते तत् 'चित्तसंस्कारः' इति उच्यते, न तु 'चित्त-भ्रान्तिः' इति"

यावत् त्रिविक्रमस्य वचनं सम्पूर्णं न समाप्तं तावता शवान्तर्गतः वेतालः शवसहितम् अदृश्यः भूत्वा वृक्षस्य शाखाम् अवलम्बितवान् ।





# उत्तमः शिष्यः

कोसलदेशस्य राजधान्याः समीपे किञ्चित् अरण्यम् आसीत्। तत्र आचार्यस्य कमलानन्दस्य आश्रमः आसीत्। एषः सर्वशास्त्रपारङ्गतः श्रेष्ठः पण्डितः। धनिकपुत्राः महाराजस्य पुत्राः च बहवः एतस्य आश्रमे स्थित्वा विद्याभ्यासं कुर्वन्ति स्म।

आचार्यकमलानन्दस्य कश्चन विशेषः आसीत् यत् एषः पाठनसमये कदापि ईश्वरस्य नाम्नः प्रस्तावं अपि न करोति स्म। यदि कश्चित् ईश्वरे भक्तिमान् सन् किमपि पृच्छति चेत् एषः वदति स्म-"एषः प्रश्नः भवतः भाविजीवनसम्बद्धं न किल? यदि दैवभक्तिः अस्ति तर्हि सा स्वभावसहजा। तत्र पठनीयं किमपि नास्ति। भाविजीवने उन्नतिः प्राप्तव्या चेत् विवेकः ज्ञानं च आश्रयणीयम्। तदर्थम् आवश्यकी मानसिकशक्तिः सम्पादनीया। एतदर्थम् एव किल विद्याभ्यासः?" इति।

कमलानन्दस्य शिष्यगणे मणिपुरस्य राजकुमारः चन्द्रसेनः आसीत्। नागपुरस्य राजकुमारः सूर्यसेनः अपि आसीत्।

कालान्तरे उभौ अपि राजकुमारौ विद्याभ्यासं क्रमपूर्वकं समाप्य आचार्यस्य अनुमतिं सम्पाद्य स्वदेशं गतवन्तौ। अल्पे एव काले सिंहासनम् आरूढवन्तौ च।

एकदा कमलानन्दः शिष्ययोः राज्यपालनं परिशीलयितुम् इच्छन् आश्रमात् प्रस्थितः। तेन सह तदीयः ज्येष्ठशिष्यः रामदासः अपि आसीत्।

आचार्यः प्रथमं चन्द्रसेनस्य राज्यं मणिपुरं गतवान्। राज्ये सर्वत्र मन्दिराणि दृष्टानि। मन्दिरस्य पुरतः वितानाः निर्मिताः दृश्यन्ते स्म।

तत्र अन्नदानं प्रचलति स्म। निर्धनिकाः बहवः भोजने निरताः आसन्।

राजा चन्द्रसेनः आचार्यं गौरवपूर्वकं स्वागतीकृत्य सत्कृतवान्।

आचार्यः चन्द्रसेनं पृष्टवान्- "अहं भवतः राज्ये सर्वत्र बहूनि मन्दिराणि दृष्टवान्। भगवतः विषये भवतः महती श्रद्धा इति भाति। सत्यं किल?"

चन्द्रसेनः विनयेन उक्तवान्-"ईश्वरविषये तादृशी विशेषश्रद्धा नास्ति, श्रीमन्!" इति।

"तर्हि राज्ये एतावन्ति मन्दिराणि कथं दृश्यन्ते? राजादरः एव अत्र कारणं किल?" इति पृष्टवान् कमलानन्दः।

"गुरुदेव! मदीयाः प्रजाः भगवतः विषये विशेषश्रद्धां प्रदर्शयन्ति। प्रजानां भावनां पुरस्कुर्वन् अहं मन्दिराणां व्यवस्थां कृतवान्"। इति उक्तवान् चन्द्रसेनः।

आचार्यः कमलानन्दः ततः सूर्यसेनस्य राज्यं नागपुरं प्रति प्रस्थितः। नागपुरराज्ये एकमपि देवमन्दिरं तेन न दृष्टम्।

कमलानन्दः कांश्चित् जनान् पृष्टवान्- "ईश्वरे भवतां विश्वासः नास्ति वा?" इति।

"अस्माकं तु ईश्वरे महती श्रद्धा। किन्तु अस्मदीयः राजा ईश्वरे सर्वथा श्रद्धाविरहितः" इति जनाः उक्तवन्तः।

सूर्यसेनः अपि आदरपूर्वकं कमलानन्दं स्वागतीकृत्य सत्कारं कृतवान्। शिष्यस्य योगक्षेमं विचार्य आचार्यः आश्रमं प्रत्यागतवान्।



तदा आचार्यः शिष्यं रामदासं पृष्टवान्- "मम शिष्ययोः सूर्यसेनचन्द्रसेनयोः मध्ये कः श्रेष्ठः ?" इति।

"सूर्यसेनः एव उत्तमः शिष्यः इत्यत्र सन्देहः एव नास्ति" इति उक्तवान् रामदासः।

'कथम् ?' इति पृष्टवान् कमलानन्दः।

रामदासः उक्तवान्- "ईश्वरविषये मम श्रद्धा नास्ति इति चन्द्रसेनः उक्तवान् आसीत्। किन्तु एतद्विरुद्धं सः राज्ये सर्वत्र मन्दिराणि निर्मितवान्। सूर्यसेनस्य राज्ये एकम् अपि मन्दिरं न दृष्टम्। एतेन सूर्यसेनः स्वविचारानुगुणम् आचरति इति तु सिद्धम्। अतः सः एव शिष्ययोः उत्तमः" इति उक्तवान् रामदासः।

कमलानन्दः किञ्चित्कालं मौनं स्थित्वा पुनः उक्तवान्- "अहं पाठनसन्दर्भे कदापि ईश्वरभक्तिविषये प्रस्तावम् अपि न कृतवान्। यदा शिष्यैः पृष्टं तदा अपि विवेकज्ञानादिविषये एव बोधितवान्। उभौ अपि मम उपदेशं ज्ञातवन्तौ वा न वा इति अहं न जानामि। यतः गौणीं मन्दिरसमस्याम् एव उभौ अपि प्रधानतया स्वीकृतवन्तौ, भिन्नभिन्नमार्गम् आश्रितवन्तौ च। सूर्यसेन भगवतः विषये अश्रद्धः। किन्तु तदीयाः प्रजाः श्रद्धालवः। कर्तव्यपालन-दृष्ट्या सूर्यसेनेन प्रजानां भावः आदरणीयः आसीत्। तथापि सः अधिकारबलेन स्वकीयं भावं प्रजानाम् उपरि आरोपितवान्। प्रजानाम् असन्तोषस्य फलं तेन अनुभोक्तव्यम् अपि भवेत् कदाचित्" इति।

"तर्हि चन्द्रसेनस्य व्यवहारः उचितः वा ? इति पृष्टवान् रामदासः।

"आम्। प्रजानाम् अभिलाषम् अनुसृत्य राज्यशासनं कुर्वन् अस्ति चन्द्रसेनः। प्रजानां विश्वासं मानयन् सः मन्दिराणि निर्मितवान्। अन्नादानादिव्यवस्थया प्रजानां प्रीतिं सम्पादितवान् च। एतदेव उत्तमराजस्य लक्षणम्। अतः चन्द्रसेनः एव मम उत्तमशिष्यः" इति आचार्यः कमलानन्दः उक्तवान्।






# सचिवस्य दायित्वम्

**आ**नन्दगिरिराज्यस्य महाराजः कुमारवर्मा नूतनतया पट्टाभिषिक्तः आसीत्। यदा सः शासनं कर्तुम् आरब्धवान्, तदा राज्यस्य आर्थिकस्थितिः अतीव हीनावस्थां प्राप्ता आसीत्। इतः पूर्वं यदा तस्य पिता शत्रुनृपैः सह युद्धं कृतवान्, तदा राज्यस्य कोशागारं पूर्णतया रिक्तं जातम्। इदानीं एतां दुरवस्थां यथा अन्ये न जानीयुः, तथा युक्त्या कोशागारं पूरणीयम्। किन्तु कथम्?

तस्य सचिवः मुकुलशर्मा। तेन सह महाराजः आर्थिकपरिस्थितेः समीकरणार्थं समालोचितवान्।

समालोचनानन्तरं नूतनकराणां द्वारा एव कोशागारं पूरणीयम् इति निर्धारः कृतः। महाराजः स्वीयम् अभिप्रायं एवं प्रकटितवान् यत् स्वयमेव प्रजानां पुरतः गत्वा राज्यस्य परिस्थितिं वर्णयित्वा सर्वेषां यथा विश्वासः भवेत्, तथा बोधयामि इति।

तदा मुकुलशर्मा- "नूतनकरभारकल्पनस्य कारणादिकं स्वयं भवान् एव प्रजानां पुरतः न वदतु, प्रभो! तादृशविचारान् अधिकारिजनाः निर्वहन्ति। ते एव जागरूकतया कार्यसाधनं कुर्वन्ति" इति सूचितवान्।

सचिवस्य सूचनाम् अङ्गीकृत्य महाराजः कुमारवर्मा तूष्णीं जातः। मुकुलवर्मा महान् चतुरः दक्षः च इति सः जानाति स्म।

अनन्तरं केचन मासाः अतीताः। शीतकालः प्राप्तः। तदा एकस्यां रात्रौ महाराजः सचिवः च नागरिकाणां वेषं धृत्वा नगरमध्ये सञ्चारार्थं प्रस्थितौ। तेषां गमनमार्गे एकत्र अग्निं स्थापयित्वा तं परितः केचन जनाः स्वीयशरीराणां उष्णीकरणार्थम् उपविष्टाः आसन्। राजा सचिवः च गत्वा तेषां पार्श्वे उपविष्टवन्तौ।

"भामहः"




ते जनाः जल्पन्ति स्म। मध्ये महाराजः अपि एकं प्रश्नं पृष्टवान्। तदा तत्र स्थितः एकः वृद्धः- "महत् कष्टम् आपतितम् अस्ति भोः! एतेषु दिनेषु राज्ये यादृशं करबाहुल्यम् अस्ति, तादृशं तु पूर्वम् अस्मिन् राज्ये कदापि न आसीत्। कराणां कापि सीमा एव नास्ति। अधिकारिणः जनान् भर्त्सयन्तः भाययन्तः च बलात्कारेण करान् वशीकुर्वन्ति। अस्माकं दुरवस्थां महाराजं निवेदयामः इति चेत्, ते अवकाशम् एव न यच्छन्ति" इति वदन् नूतनकरान् दातुम् अशक्तानां प्रजानां परिस्थितिं वर्णितवान्।

किञ्चित्कालपर्यन्तं तत्रैव स्थित्वा, अनन्तरं राजा सचिवः च ततः उत्थाय गतवन्तौ।

सचिवः हसन् महाराजं- "दृष्टवान् खलु प्रभो! वस्तुतः भवता एव नूतनकराः विहिताः। किन्तु प्रजानां क्रोधः तु करग्राहकाणां अधिकारिजनानाम् उपरि एव अस्ति" इति उक्तवान्।

महाराजः किञ्चित् आलोच्य- "तत् अस्तु तावत्। इदानीं प्रजासु असन्तोषः प्रतिदिनं वर्धमानः अस्ति इति स्पष्टरूपेण ज्ञातम्। तस्य निवारणार्थं किं करणीयम् इति प्रथमं चिन्तनीयम्" इति उक्तवान्।

"तावती त्वरा मास्तु प्रभो। अहं राज्यस्य आयव्ययादिकं परिशीलयन् अस्मि। कोशागारं इदानीं परिपूर्णम् अस्ति। अतः भवान् आज्ञां ददाति चेत् नूतनकराः सर्वे निष्कास्यन्ते" इति उक्तवान् मुकुलशर्मा।

महाराजः कुमारवर्मा महता सन्तोषेण "एवं वा! पूर्वम् एव किमर्थं न उक्तम्? इदानीं तर्हि नूतनकराः निष्कास्यन्ते इति अधिकारिजनद्वारा शीघ्रम् एव घोषयतु। विलम्बः मास्तु" इति उक्तवान्।

तस्य वचनं श्रुत्वा मुकुलशर्मा स्मयमानः "प्रभो तादृशघोषणं अधिकारिजनद्वारा मास्तु। भवान् एव प्रजानां पुरतः स्वयं गत्वा आज्ञां ददातु" इति उक्तवान्।

महाराजः आश्चर्येण सचिवस्य मुखं दृष्टवान्।

तस्य अभिप्रायं ज्ञात्वा सचिवः "सत्यं प्रभो ! पूर्वं नूतनकराणां विधानसमये प्रजानां पुरतः भवतः गमनम् अहं निवारितवान् । यद्यपि भवतः उद्देशः साधुः एव स्यात्, तथापि प्रजाः नूतनकरान् सन्तोषेण न अङ्गीकुर्वन्ति" इति उक्तवान् ।

"तथापि अस्माकं अधिकारिणः यथा-कथञ्चित् प्रजाभ्यः नूतनकराणां सङ्ग्रहणं कृत्वा अस्माकं कोशागारं पूरितवन्तः खलु ?"

"अतः एव प्रजानां असन्तोषस्य लक्ष्यीभूताः ते एव जाताः । भवान् रक्षितः । महाराजः साधुः इति प्रजानां विश्वासः न नष्टः । यदि भवान् एव नूतनकराणां प्रकटनं कुर्यात्, तर्हि सिंहासनस्य आरोहणसमनन्तरम् एव प्रजासु अशान्तिः उत्पद्येत" इति उक्तवान् सचिवः ।

"भवतः वचनं युक्तियुक्तम् अस्ति । इदानीं तर्हि नूतनकराणां निष्कासनप्रकटनं तु मया एव करणीयम् इति किमर्थं वदति ? तदपि अधिकारिजनद्वारा एव कारयामः चेत् का हानिः ?" इति पृष्टवान् महाराजः ।

"कराणां निष्कासनं नाम प्रजानां महती शुभवार्ता भवति । तस्याः वार्तायाः प्रकटनं भवतः द्वारा भवति चेत् भवतः विषये प्रजानां विश्वासः द्विगुणितः भवति । इतः परम् अपि प्रजापालनसमये ये निर्णयाः जनानां असन्तोष-जनकाः भवन्ति, तेषां निर्वहणदायित्वं अधिकारिजनानां हस्ते एव देयम् । तथैव ये निर्णयाः प्रजानां हर्षजनकाः भवन्ति, तेषां प्रकटनं भवान् स्वयं करोतु" इति उक्तवान् महासचिवः मुकुलशर्मा ।

स्वीयसचिवस्य प्रतिभां चातुर्यं च दृष्ट्वा महाराजः कुमारवर्मा मनःपूर्वकं तम् अभिनन्दित-वान् । परेद्युः प्रजानां पुरतः स्वयं गत्वा नूतनकराणां निष्कासनसम्बन्धिप्रकटनं कृतवान् । तत् श्रुत्वा प्रजाः उच्चैः हर्षोद्गारं कृतवन्तः ।

एवंरीत्या अनेकवर्षपर्यन्तं सः महाराजः सलीलं राज्यपरिपालनं कृतवान् ।





# लोकरीतिः

यदा ब्रह्मदत्तः काशीराज्यं परिपालयति स्म, तदा बोधिसत्वः कौशाम्बिनगरे कृष्णद्वैपायनः इति नाम्ना धनिकब्राह्मणकुले जन्म प्राप्तवान्। यथा यथा सः वर्धमानः प्रौढः जातः, तथा तथा लौकिकव्यवहारेषु विविधान् अनर्थान् दृष्ट्वा वैराग्यभावं प्राप्तवान्।

तस्य परिणामरूपेण सः स्वीयां सम्पूर्णां चराचरसम्पत्तिं दानधर्मादिकार्येषु वितीर्य सन्यासधर्मं स्वीकृतवान्। अनन्तरं स्वस्थानतः प्रस्थितः सः साक्षात् हिमालयपर्वतं गत्वा दीर्घं तपः आचरितवान्। तथापि सः कामपि सिद्धिं प्राप्तुम् असमर्थः अभवत्।

अनन्तरं निराशया तपश्चरणं त्यक्त्वा कृष्णद्वैपायनः क्षेत्राटनं कर्तुम् आरब्धवान्। तीर्थयात्रां कुर्वन् काशीराज्यं गतवान् च।

तत्र एकस्मिन् ग्रामे तस्य बाल्यस्नेहितः माण्डव्यः मिलितवान्। माण्डव्यः स्वीयग्रामे एव स्थातुं कृष्णद्वैपायनं प्रीत्या प्रार्थितवान्। सः कृष्णद्वैपायनस्य निवासार्थम् एकम् उत्तमं पर्णकुटीरं निर्माय, अपेक्षितानि सर्वाणि वस्तूनि तस्मै अर्पितवान्। तादृशमित्रस्य प्रार्थनां निराकुर्तुम् असमर्थः कृष्णद्वैपायनः तस्मिन् पर्णकुटीरे स्थितवान्।

कदाचित् माण्डव्यस्य पुत्रः यज्ञदत्तः नाम बालकः कन्दुकेन क्रीडति स्म। क्रीडामध्ये यदा सः कन्दुकं सरभसं दूरं क्षिप्तवन्, तदा सः कन्दुकः एकस्मिन् वल्मीके पतितः।

अज्ञः सः बालकः वल्मीके सर्पः वसति इति विषयं ज्ञातुम् असमर्थः, कन्दुकं ग्रहीतुं वल्मीके हस्तं प्रसारितवान्। सद्यः सर्पेण तस्य हस्तः दष्टः। कर्कशस्वरेण आक्रोशं कुर्वन् यज्ञदत्तः अधः पतितवान्। सम्पूर्णशरीरे विषं व्याप्तम्। सः शीघ्रम् एव अचेतनः जातः।

स्वीयपुत्रस्य परिस्थितिं मरणासन्नां दृष्ट्वा

"जातककथा"



पत्नीसहितः माण्डव्यः भयेन पुत्रं स्वहस्तयोः स्थापयन् महता दुःखेन पर्णकुटीरं गत्वा कृष्ण-द्वैपायनस्य पादयोः पुरतः शायितवान्। कृष्ण-द्वैपायनः किं जातम् इति पृष्टवान्।

"भोः तपोधन ! भवता प्रतिष्ठिते अस्मिन् प्रान्ते अतीव अनुचितघटना जाता अस्ति। भवतः तपःप्रभावेण भवान् एतं जीवयतु। आवयोः भवन्तं विना अन्या गतिः एव नास्ति। कृपया पुत्रभिक्षां ददातु" इति तौ दम्पती दीनभावेन प्रार्थितवन्तौ। अनन्तरं सर्वं वृत्तान्तं कथितवन्तौ च।

कृष्णद्वैपायनः तु किङ्कर्तव्यतामूढः जातः। "मम विषये भवताम् अन्यथा अभिप्रायः अस्ति। मयि काऽपि विशेषशक्तिः नास्ति। यद्यपि अहं बहुकालपर्यन्तं तपः आचरितवान्, तथापि तेन तपसा कामपि सिद्धिं न प्राप्तवान्। न्यूनातिन्यूनं यत्किञ्चित् औषधमूलम् अपि न जानामि। एतादृशः अप्रयोजकः अहं किं वा साहाय्यं कर्तुं शक्नोमि? कथं वा भवत्पुत्रं जीवयामि?" इति दुःखेन सः उक्तवान्।

"यद्यपि भवता महती तपःशक्तिः न सम्पादिता स्यात्, तथापि तावत्पर्यन्तं कृतस्य तपसः किञ्चिदपि फलं नास्ति इति वक्तुं न शक्यते। भवान् प्रतिज्ञापूर्वकं किञ्चित् सत्यवचनं वदतु, भवदनुग्रहेण बालकः निश्चयेन जीवति" इति माण्डव्यः उक्तवान्।

कृष्णद्वैपायनः तस्य अभिप्रायम् अङ्गीकृत्य एवंरीत्या प्रतिज्ञापूर्वकं सत्यवचनं उक्तवान्-

"सत्ताहं एवाहं प्रसन्नचित्तो
पुञ्ञत्थिको अचरिं ब्रह्मचरियं
आधावरं यं चरितं मम इदम्
वस्यानि संज्ञानसमाधिकानि
अकामको वहि अहं चरामि
एतेन सच्चेन सुवत्थि होतु
हतं विसं, जीवतु यञ्ञदत्तो"।

(अहं पुण्यापेक्षया किञ्चित्कालपर्यन्तं निर्मलचित्तेन ब्रह्मचर्यम् अवलम्ब्य तपः आचरितवान्। किन्तु अनन्तरं वैराग्यभावेन पञ्चाशत्वर्षपर्यन्तं यत् अहं तपः आचरितवान्, तत्र चित्तशुद्धिः वा एकाग्रता वा न आसीत्।



"यस्मा दानं न अभिनन्दि कदाचि
दिस्वानाहम् अतिथिं वा सकाले
न चापि मे अप्पियम् अलेदुम्
बहुस्सुता समणा ब्राह्मणा च
अकामको वा हि अहं ददामि
एतेन सच्चेन सुवत्थि होतु
हतं विसं, जीवतु यज्ञदत्तो"

"यद्यपि अहम् अतिथिजनानां सत्कारं कृतवान्, तथापि तत्सर्वम् अहम् इच्छापूर्वकं न कृतवान्। ज्ञानिनः सन्यासिनः, ब्राह्मणाः च मम आतिथ्यम् अनिच्छया कृतम् इति न ज्ञातवन्तः। तथैव दानधर्मादिकम् अपि अहम् अनिच्छया एव कृतवान्। एतत् सर्वं वञ्चना-कार्यम् इति अपि अहं जानामि। मया क्रिय-माणस्य एतस्य प्रमाणवचनस्य परिणामरूपेण विषनिवारणं भवतु। यज्ञदत्तः जीवतु" इति।

एवंरीत्या यदा माण्डव्यः सत्यवचनम् उक्त-वान्, तदा पुनः यज्ञदत्तस्य पृष्ठतः किञ्चित् विषं बहिः निर्गत्य भूमौ विलीनम् अभवत्। बालकः शनैः शनैः उत्थाय उपविष्टवान्। किन्तु उपरि उत्थातुम् असमर्थः एव आसीत्।

तदा माण्डव्यः स्वपत्नीं दृष्ट्वा "भवती अपि भवतः नाम ध्यात्वा भवत्याः यथार्थाभि-प्रायं स्पष्टरूपेण वदतु। तेन यज्ञदत्तः सम्पूर्ण-रूपेण स्वस्थः भवेत्" इति उक्तवान्।

"यद्यपि मया प्रकटनीयम् एकं सत्यवचनम्

एतस्य मम सत्यवचनस्य शुभ फलं लभ्यताम्। विषं निर्गच्छतु। यज्ञदत्तः जीवतु।)

सद्यः एव बालकस्य वक्षःस्थलतः किञ्चित् विषं निर्गत्य भूमौ पतित्वा लीनम् अभवत्। बालकः नेत्रे उन्मील्य स्वमातापितरौ एकवारं दृष्टवान्। अनन्तरं 'अम्ब' इति वदन् पुनः अचेतनः भूत्वा पतितवान्।

"दृष्टं खलु ? सम्पूर्णतया विषं निवारयितुम् अहम् असमर्थः जातः। अतः माण्डव्य! भवान् अपि प्रमाणपूर्वकं सत्यवचनं वदतु। तेन प्रायः फलं लभ्येत। सत्यस्य सामर्थ्यम् अद्‌भुतं भवति" इति कृष्णद्वैपायनः उक्तवान्।

एतत् अङ्गीकृत्य माण्डव्यः स्वयम् अपि प्रतिज्ञापूर्वकं सत्यवचनं एवंरीत्या उक्तवान्-

अस्ति, तथापि भवतां पुरतः वक्तुं न शाक्नोमि। किं करोमि?' इति पृष्टवती माण्डव्यस्य पत्नी।

"अयि मुग्धे! चिन्ता मास्तु। किमर्थं सङ्कोचम् अनुभवति? आवयोः पुत्रस्य प्राणापेक्षया अपि प्रियतरं किं वा स्यात्? निस्सङ्कोचं सत्यवचनं वदतु" इति माण्डव्यः स्वपत्नीं प्रेरितवान्। सा मनः दृढं कृत्वा उक्तवती-

"आसो विसो तात पहूत तेजो
ये तम् अदद्दि पदरा इदच्चि
तस्मिन् च मे अप्पियताय अज्जं
पितरि च ते न त्थि कोच्चि विसेसो
एतेन सच्चेन सुवत्थि होतु
हतो विसं, जीवतु यज्ञदत्तो"

("पुत्र! वल्मीके स्थितः सः सर्पः भवन्तं दष्टवान्। तस्य दर्शनेन मम यादृशी जुगुप्सा भवति, तादृशी एव जुगुप्सा मम पत्युः दर्शनेन अपि भवति। द्वयोः मध्ये कोऽपि भेदः न दृश्यते। एतस्य मम सत्यवचनस्य परिणामरूपेण सम्पूर्णविषस्य निवारणं भवतु। यज्ञदत्तः जीवतु।")

यदा तस्याः वचनसमाप्तिः अभवत्, तदा यज्ञदत्तस्य शरीरतः विषं सम्पूर्णतया बहिः निर्गत्य भूमौ विलीनम् अभवत्। सः सलीलम् उत्थाय पूर्ववत् क्रीडामग्नः अभवत्।

माण्डव्यः कृष्णद्वैपायनं दृष्ट्वा "स्वामिन्, भवान् उत्तमोत्तमं तपस्विजीवनं गृहीतवान् अस्ति। तथापि तत् जीवनं किमर्थम् अनि-



च्छया यापयति ." इति पृष्टवान्।

तदा कृष्णद्वैपायनः "तस्य एकम् एव कारणम् अस्ति। यः मनुष्यः एकवारं संन्यासं स्वीकृत्य निर्गच्छति, सः पुनः कुटुम्बजीवनं प्रविशति चेत् सर्वे तं तिरस्कारदृष्ट्या पश्यन्ति। मूढः इति उपहसन्ति। अतः यद्यपि इच्छा न आसीत्, तथापि जनानां गौरवसम्पादनार्थम् अहं तपस्विजीवनम् एव यापयन् स्थितवान्। तत् अस्तु तावत्। भवान् पुनः अतिथि-जनानाम् अभ्यागतानां च सत्कारं अनिच्छया एव करोमि इति उक्तवान्। तस्य कारणं किम् ?" इति पृष्टवान्।

"मम पितृपितामहादयः दानशीलाः इति जगत्प्रसिद्धाः। अतः गत्यन्तराभावात् मया अपि तादृशम् एव जीवनं यापनीयम् अस्ति। नो चेत् वंशस्य कलङ्कभूतः इति मां जनाः निन्दन्ति। अतः अहम् अपि यथेष्टं दान-धर्मादिकं करोमि। मम तु एतत् सर्वं कर्तुं किञ्चिदपि इच्छा नास्ति" इति उक्त्वा माण्डव्यः पत्नीम् उद्दिश्य "भवती एतावत्पर्यन्तं मया सह जीवनं यापितवती। मद्विषये प्रीत्यभावात् भवत्याः जीवनं असहनीयम् एव अस्ति इति ज्ञातम्। एतत्सर्वं किमर्थं सोढवती ?" इति पृष्टवान्।

तदा तस्य पत्नी—"अस्माकं वंशे पत्या सह एव जीवनं यापनीयम् इति सम्प्रदायः अस्ति। अतः अहम् एतत् असह्यं जीवनम् अपि सोढवती। भवन्तं त्यक्त्वा अहम् अन्येन सह यदि गच्छामि तर्हि जनाः मां कुलटा इति निन्दन्ति किल ?" इति उक्तवती।

"अस्तु। इतः परम् अहं भवतीं प्रीत्या एव पश्यामि इति प्रतिज्ञापूर्वकं वदामि। एतदर्थं चिन्तां न करोतु" इति माण्डव्यः उक्तवान्।

"भवान् अपि दानधर्मादिकं मनःपूर्वकम् एव करोतु। अनिच्छया न करोतु। अहम् अपि इतः परम् एतत् तापसजीवनं मनःपूर्वकम् एव यापयामि" इति उक्त्वा कृष्णद्वैपायनः ततः निर्गत्य तपश्चरणार्थं देशान्तरं गतवान्।





अस्माकं नद्यः –

# यमुना

महाकविना कालिदासेन 'देवतात्मा' 'पर्वतराजः' इति यस्य हिमालयस्य वर्णनं कृतं, ततः एव बह्व्यः नद्यः प्रवहन्ति। एताः एव भारतस्य जीवनाड्यः अपि। प्राचीनाः जनाः नदीः केवलं प्रकृतिजन्याः न मन्यन्ते स्म। अपि तु तैः तासु नदीषु सजीवः आत्मा दृष्टः।

उदाहरणरूपेण यमुनानदीम् एव पश्यन्तु- अस्मदीयपूर्वजानां कथनानुसारम् एषा सूर्यस्य सन्ध्यादेव्याः च पुत्री। एतस्याः सहोदरः यमः। अतः एतस्याः नाम अपि 'यमुना' इति। सृष्टौ भूतले भागः ग्रहीतव्यः इति इच्छया एषा नदीरूपं प्राप्तवती इति श्रूयते।





कलिन्दपर्वतस्य पादप्रदेशे यमुनोत्री समीपे एषा यमुना उद्भवति। समुद्रतलतः १०८०० पादमिते उन्नते स्थले स्थिता यमुनोत्री अद्भुतदर्शना। पवित्रे अस्मिन् प्रदेशे यमुनादेव्याः मन्दिरम् अपि अस्ति।




प्राचीनकाले पर्वतप्रदेशेषु प्रवहन्त्याः यमुनानद्याः आवर्तादिभिः सहितः प्रवाहः अतिभयङ्करः आसीत्। अतः यः कोऽपि एतस्याः नद्याः समीपं न गच्छति स्म। जलप्रपातस्य ध्वनिः शतसिंहानां ध्वनिम् अतिरिच्यते स्म। जलप्रपातप्रदेशे उत्पन्नं बाष्पं मेघरूपं प्राप्तं सत् रमणीयं दृश्यते स्म।

एकदा कृष्णस्य अग्रजः बलरामः सञ्चरन् यमुनानद्याः समीपम् आगतवान्। यमुनाप्रवाहं दृष्ट्वा सः 'अत्र स्नानं करणीयम्' इति आलोचितवान्। जलप्रपातसमीपे स्थिताम् एकां विशालशिलाम् आरुह्य यमुनानदीं स्वसमीपम् आहूतवान्।





बलरामस्य आह्वानं यमुना उपेक्षितवती। बलरामः पुनः पुनः आहूतवान्। तथापि प्रयोजनं किमपि न दृष्टम्। बलरामः उत्प्लुत्य जलप्रवाहं स्वयं प्रविष्टवान्। जलप्रवाहः तं दूरं क्षेप्तुं प्रयत्नम् अकरोत्। एतेन बलरामः अतीव क्रुद्धः।

बलरामः तीरं आगत्य यमुनाम् हलायुधेन बलात् आकृष्टवान्। अनन्तरं सः तां पर्वतेषु कन्दरेषु समतलप्रदेशेषु सर्वत्र नीतवान्। इतस्ततः नयन् सम्यक् पीडितवान्। यमुना असहाया बलरामस्य हलस्य रेखाम् अनुसृत्य गच्छति स्म।





अन्ते यमुना स्त्रीरूपेण प्रत्यक्षीभूय बलरामं प्रार्थितवती- 'मां पीडातः उन्मुक्तां करोतु' इति। तदा बलरामः शान्तः जातः। यमुनां पीडामुक्तां कृतवान्। तदा आरभ्य यमुना मन्दं प्रवहन्ती अस्ति।

अनन्तरं यमुना पुराणप्रसिद्धयोः इन्द्रप्रस्थ-हस्तिनापुरयोः मध्ये प्रवहन्ती गता। कालान्तरे अदृश्यतां गतयोः एतयोः नगरयोः सीमाक्षेत्रे एव इदानीन्तनं 'देहलीनगरं' निर्मितम् अस्ति। इतिहासप्रसिद्धस्य रक्तदुर्गस्य पार्श्वे एव यमुना प्रवहति।





प्राचीननगर्याः मथुरायाः पार्श्वे अपि यमुना प्रवहति । मथुराधीशस्य दुष्टराजस्य कंसस्य कारागारे एव श्रीकृष्णस्य जन्म जातम् । यदा पिता वसुदेवः नवजातं शिशुम् उन्नीय गोकुलं गच्छति स्म, तदा नर्मदातरण-समये सर्पराजः वासुकिः धाराकार-वृष्टेः आघातं निवारयन् छत्ररूपेण स्वफणान् विस्तृतवान् आसीत् ।

यमुनातीरे स्थिते वृन्दावने एव कृष्णः स्ववेणुवादनेन पशुपक्षिणः गोपगोपिकाः च मोहयति स्म । मुरली-मोहनस्य कृष्णस्य बाललीलायाः यमुनायाः च मध्ये अविभक्तः सम्बन्धः अस्ति ।





गङ्गायमुनयोः सङ्गमस्थलस्य प्रयागस्य समीपे गुप्तगामिनी सरस्वती नदी अपि गङ्गानद्या सम्मिलति । त्रिवेणीसंगमे प्रयागे स्नानकरणेन पापानि नश्यन्ति पुण्यसम्पादनं च भविष्यति इति भक्तजनानां विश्वासः ।

# विवेकः उदितः।

महाराजस्य मार्ताण्डस्य आस्थाने सुबुद्धिः नाम मन्त्री आसीत्। सः नामानुगुणं विशेष-बुद्धिमान्।

महाराजस्य आस्थाने केचन दासाः अपि आसन्। राजा तान् पशुतुल्यान् भावयति स्म।

एकदा सुबुद्धिः महाराजं प्रार्थितवान्- "राजन्! एते दासाः अपि इतरे जना इव मानवाः एव। अतः एतेषां विषये कुदृष्टिः न उचिता" इति।

राजा उत्तरितवान्- 'तत् तु तेषां दौर्भाग्यम्। यथा राजकुले जातः राजा भविष्यति तथैव दासकुले जातः दासः एव भवेत्' इति।

कानिचन दिनानि अतीतानि। एकदा सुबुद्धिः मार्ताण्डम् उक्तवान्- "महाराज! अद्य पूर्वजानां स्मरणदिनम्। अतः वयं श्मशानं गत्वा आगच्छामः" इति। अनन्तरम् उभौ अपि श्मशानं प्रति प्रस्थितौ।

दिनद्वयतः पूर्वं वायुसहिता वृष्टिः पतिता आसीत्। अतः अस्थीनि इतस्ततः विकीर्णानि आसन्। तानि अस्थीनि एकीकृत्य मन्त्री राजानम् उक्तवान्- "महाराज! भवतः पूर्वजानां अस्थीनि कीदृशानि भवन्ति, दासानाम् अस्थीनि च कीदृशानि भवन्ति इति अहं न जानामि। एतत् भवान् ज्ञात्वा सूचयति चेत् आग्निमकार्यं सुकरं भवेत्" इति।

मन्त्रिणः वचनेन राज्ञि विवेकः उदितः। तद्दिने एव सः सर्वान् दासान् ऋणमुक्तान् कृतवान्। इतरे जनाः इव स्वतन्त्रजीवनं यापयितुं तेषां व्यवस्थां कृतवान् च।





# श्मश्रुवाणिज्यम्

एकस्मिन् ग्रामे मित्रद्वयम् आसीत्। उभौ अपि वाणिज्येन यथेष्टं धनं सम्पादितवन्तौ। किन्तु तयोः एकः अपरिमितं व्ययं करोति। अपरः तु धनाशया ग्रस्तः। प्रथमः तु खल्वाटः। द्वितीयस्य दीर्घं श्मश्रु अस्ति।

एकदा उभौ अपि लौकिकवार्तालापे मग्नौ। तदा प्रथमः उक्तवान्- "मित्र! वक्तव्यम् इति चिन्तितम् एकं वचनं मया न उक्तम्। पश्यतु, भवतः श्मश्रूणि रमणीयानि दृश्यन्ते। मया अद्यावधि बहूनां श्मश्रूणि दृष्टानि। किन्तु भवतः इव श्मश्रूणि कस्यापि न सन्ति एव। समग्रे देशे एतादृशं श्मश्रु नास्ति" इति।

एतत् श्रुत्वा द्वितीयः अतीव सन्तुष्टः। "आं मित्र! सर्वे एवम् एव वदन्ति। एतावदेव न, केचन मम श्मश्रुणः उपरि दृष्टिपातं कृतवन्तः अपि। अवकाशे प्राप्ते ते मम श्मश्रु क्रेतुम् इच्छन्ति" इति वदन् द्वितीयः पञ्चभिः अङ्गुलीभिः श्मश्रु मन्दम् आमृष्टवान्।

एतत् श्रुत्वा प्रथमः उक्तवान्- "अन्ये किमर्थं क्रीणन्तु? अहम् एव क्रीणामि। एतस्य मूल्यम् कियत्?" इति।

आशाग्रस्तस्य द्वितीयस्य मनसि तत्क्षणे एव विचित्राः स्वप्नाः! सः झटिति उक्तवान्- "तर्हि सहस्रं दीनारान् ददातु" इति।

"अत्र कः क्लेशः? भवान् इतोऽपि अधिकं वदेत् इति मम भीतिः आसीत्" इति उक्त्वा प्रथमः स्नेहितः तत्क्षते एव कोशात् पञ्चशतं दीनारान् अग्रिमधनरूपेण दत्तवान्।

एतत् दृष्ट्वा द्वितीयः आश्चर्यचकितः। प्रथमः स्वकीयान् नियमान् सूचितवान्- "मित्र! अद्य आरभ्य एतत् श्मश्रु मदीयम्। किन्तु एकः नियमः यत् अहं यावत् धनं सम्पूर्णतया दत्त्वा श्मश्रु न मद्वशीकरोमि तावत् एतस्य रक्षणं भवतः एव। मम इच्छानुसारं श्मश्रु तैलेन

"पञ्चविंशतिवर्षेभ्यः पूर्वं चन्दमामायां प्रकाशिता कथा"

लेपनीयम् । मम अनुमतिं विना तस्य कर्त-
नादिकं निषिद्धम्'' इति ।

''एतत् किं कष्टकरं वा ?'' इति चिन्तयन् द्वितीयः प्रथमस्य नियमान् सर्वान् अङ्गीकृतवान् ।

प्रथमः पुनरपि उक्तवान्- ''महाशय ! अन्यः कश्चन विषयः यत् अद्य आरभ्य कश्चन भवतः श्मश्रुणः प्रशंसां करोति चेत् तदा भवता वक्तव्यम्- 'एतत् मदीयं न, अपि तु मम मित्रस्य । सः धनं दत्त्वा एतत् क्रीतवान् । तत्परतया अहं एतस्य योगक्षेमं निर्वहन् अस्मि ' इति । स्मरतु एतत्'' इति ।



द्वितीयः एतत् अपि मौनम् अङ्गीकृतवान् । अनन्तरदिनेषु प्रथमः समये असमये यदा-कदापि द्वितीयस्य गृहं गन्तुम् आरब्धवान् । तदा प्रथमः पृच्छति- ''मित्र, कः विशेषः ? किमर्थम् आगतवान् ?'' इति । तदा द्वितीयः उत्तरयति- ''विशेषः कोऽपि नास्ति । मया क्रीतं श्मश्रु द्रष्टुम् आगतवान्'' इति ।

कदाचित् प्रथमः असमये आगत्य कोपेन द्वितीयं तर्जयति- ''मित्र ! किमिदम् ? मया क्रीतं श्मश्रु नाशितवान् भवान् । पूर्वं तु एतत् कान्त्या विलसति स्म । इदानीं भवान् अल्प-मूल्यकं तैलं लेपयन् सर्वं नाशितवान् एव । एतस्य योगक्षेमनिर्वहणे भवतः आसक्तिः एव नास्ति '' इति ।

प्रतिदिनं प्रथमस्य एतादृशं तर्जनं श्रुत्वा द्वितीयः खिन्नः । उभयोः मध्ये वादविवादः अपि प्रवृत्तः । पीडया श्रान्तः द्वितीयः स्वमित्रम् उक्तवान् – ''मित्र ! यावत् दातव्यं तावत् दत्त्वा भवदीयं श्मश्रु नयतु तावत् । एतस्य पोषणे अहम् असमर्थः '' इति ।

द्वितीयः हसन् तूष्णीं तिष्ठति । अन्ते प्रथमः कोपेन उक्तवान्- ''पश्यतु, भवता अग्रिमधनं यत् दत्तं तत् इदानीम् एव प्रत्यर्पयामि । मम श्मश्रु विक्रेतुम् अहं न इच्छामि । इतः परं भवतः सङ्गतिः एव मास्तु'' इति ।

द्वितीयः असम्मतिं सूचयन् उक्तवान्- ''यावत् श्मश्रु नाभिपर्यन्तं न वर्धते तावत्

तत् भवतः मुखे एव भवतु। मध्ये यदि भवान् अन्यथा आचरति तत् नियमविरुद्धम्'' इति।

प्रथमः पुनरपि उक्तवान्- ''विक्रयणं करोमि इति अहं यत् उक्तवान् तदेव दोषाय जातम्। भवता यत् अग्रिमधनं दत्तं तस्य द्विगुणितं धनम् अद्य एव ददामि। व्यवहारः समाप्तः भवतु'' इति।

द्वितीयः एतत् अपि न अङ्गीकृतवान्। इतोऽपि अधिकं सम्पादयितुं शक्यते इति तस्य आशा।

किं करणीयम् इति न जानाति स्म द्वितीयः। एवम् एव कानिचन दिनानि अतीतानि। एकस्मिन् दिने रात्रौ प्रथमः स्वमित्रस्य गृहं गतवान्। सः स्नेहितः गाढ-निद्रायां मग्नः आसीत्। प्रथमः साक्षात् शयनगृहं प्रविश्य निर्दाक्षिण्यपूर्वकं द्वितीयस्य श्मश्रु बलेन आकृष्टवान्। हन्त ! तदीयं श्मश्रु द्वितीयस्य हस्ते !

द्वितीयः झटिति उत्थाय 'हा' इति आक्रोशं कृतवान्। प्रथमः 'भवान् मां वञ्चितवान्' इति तं सम्यक् निन्दितवान्। पूर्वं अङ्गीकृतस्य नियमस्य आधारेण न्यायालयं गतवान् च।

वस्तुतः न्यायाधीशः चतुरः। सः उभयोः अपि मनोभावं ज्ञातवान्। सः एतदपि ज्ञातवान् यत् प्रथमस्य पीडां सोढुम् अशक्तः द्वितीयः नैजं श्मश्रु मुण्डयित्वा कृतकं श्मश्रु धृतवान् इति।

उभयोः अपि अभिप्रायं ज्ञात्वा न्यायाधीशः स्वनिर्णयम् उद्घोषितवान्- ''परिहासाय कृतं प्रस्तावं द्वितीयः धनाशया अङ्गीकृतवान्। प्रथमः एतस्य दुर्लभं स्वीकर्तुम् इच्छन् दुराशां प्रदर्शितवान्। अतः प्रथमेन अग्रिमधनस्य प्रतिफलरूपेण कृत्रिमश्मश्रु यत् प्राप्तं तेन एव सन्तोष्टव्यम्। द्वितीयः अपि अवशिष्टं धनं न पृच्छेत्। उभाभ्याम् अपि स्वदुराशायाः अनुगुणं फलं प्राप्तम् अस्ति'' इति।





# शीघ्रकोपी पतिः

पूर्वं कस्मिंश्चित् ग्रामे बलभद्रः नाम कृषिकः आसीत्। सः वस्तुतः परिश्रमशीलः, किन्तु शीघ्रकोपी अपि। क्रोधसमये सः सर्वथा मूर्खः भवति स्म। 'किं क्रियते' इति स्वयम् एव न जानाति स्म। तदीया पत्नी शान्ता तु नामानुगुणं शान्ता एव। सा विना-विरोधं पत्युः व्यवहारं सहते स्म।

किन्तु सहनायाः अपि काचित् सीमा भवति किल? पत्युः कोपम् सोढुम् अशक्ता शान्ता एकस्मिन् दिने कोपेन उक्तवती- "भवान् मां किमर्थम् एवं पीडयति? भवतः विषये मया का न्यूनता आचरिता? यदि भवान् मत्कारणतः क्लेशम् अनुभवति तर्हि गृहात् मां प्रेषयतु तावत्। अत्र अहं यावता परिश्रमेण कार्यं करोमि, तावन्तं परिश्रमम् अन्य-गृहे करोमि चेत् जीवनं सुखेन याप्येत" इति।

पत्न्याः वचनैः बलभद्रस्य कोपः प्रज्वलितः। सः क्रोधेन उक्तवान्- "तर्हि एतत्क्षणे एव मम गृहात् बहिः गच्छतु। यत्रकुत्रापि यथेष्टं सुखम् अनुभवतु" इति।

पत्युः एतानि कठोरवचनानि श्रुतवत्याः शान्तायाः नेत्राभ्याम् अश्रूणि आगतानि। सा तत्क्षणे एव गृहं परित्यज्य गतवती।

तद्दिनपूर्णं बलभद्रः कोपेन ज्वलन् एव आसीत्। रात्रौ तदीयः कोपः किञ्चित् इव शान्तः। पत्नी गृहं परित्यज्य गतवती इत्यत्र तस्य विश्वासः एव नास्ति। अत्रैव पार्श्वगृहे कुत्रापि स्यात्, रात्रौ स्वयं प्रत्यागच्छति इति सः चिन्तितवान्। किन्तु मध्यरात्रे अतीते अपि सा यदा न आगतवती तदा तस्य मनसि भीतिः उत्पन्ना।

शान्तायाः बाल्ये एव मातापितरौ दिवङ्गतौ। अतः सा बाल्यात् अपि मातुलगृहे एव प्रवृद्धा। तत्र तया बहुविधकष्टानि अनुभूतानि। अनन्तरं



शान्तायाः विवाहः जातः। विवाहानन्तरं ते शान्तां न स्वगृहम् प्रति आहूतवन्तः, न वा तस्याः गृहं प्रति आगतवन्तः।

द्वितीयदिने अपि शान्ता यदा गृहं न आगता तदा बलभद्रः तस्याः अन्वेषणम् कर्तुम आरब्धवान्। प्रथमं सः ग्रामे सर्वत्र अन्विष्टवान्। अनन्तरं सः शान्तायाः मातुलस्य गृहं गतवान्। सा कुत्रापि न आसीत्।

बलभद्र कोपशीलः स्यात् नाम। किन्तु शान्तायाः विषये तस्य अपारा प्रीतिः आसीत् एव। बलभद्रः निश्चितवान् यत् यावत् शान्ता गृहं न प्रत्यागमिष्यति तावत् अहम् अपि गृहे न तिष्ठामि इति। किन्तु 'शान्तायाः अन्वेषणं कथम् ?' इति सः न जानाति स्म। अतः सः "ग्रामे पुनः एकवारम् अन्वेषणं करोमि, सर्वान् पृच्छामि च। तदा कोऽपि मार्गः स्फुरेत्" इति आलोचितवान्।

ग्रामे अटनसमये वृषभशकटम् चालयमानः रघुपतिः नाम कृषिकः मिलितः। बलभद्रं दृष्ट्वा रघुपतिः उक्तवान्- "मित्र! भवतः पत्नी मम शकटे उपविश्य रामपुरं गतवती। ततः कुत्र गता इति अहं न जानामि" इति।

रामपुरं बलभद्रस्य ग्रामतः बहु दूरे आसीत्। तथापि बलभद्रः तत्क्षणे एव रामपुरं प्रस्थितः। रामपुरं गन्तुं यः उत्तमः मार्गः आसीत् सः दूरतरः। अन्यः समीपतरः मार्गः अपि आसीत्। किन्तु तेन मार्गेण गतं चेत् मध्ये अरण्यं लभ्यते स्म। चोरभीत्या सर्वे तेन मार्गेण गन्तुं भीतिं प्रकटयन्ति स्म।

शीघ्रातिशीघ्रं पत्नीसमीपं गन्तुम् इच्छन् बलभद्रः समीपतरं भीतिपूर्णं मार्गम् एव अनुसृतवान्। किञ्चित्कालानन्तरं सः अरण्यं प्रविष्टवान्। अग्रे गच्छन् मार्गभ्रष्टः सः कस्यचित् पर्वतस्य पादप्रदेशं प्राप्तवान्। विश्रान्तिम् इच्छन् कस्याश्चित् गुहायाः समीपे उपविष्टवान् च।

सा च गुहा चोराणां निवासकेन्द्रम् आसीत्। अल्पे एव काले पञ्च चोराः तत्र आगतवन्तः। चोराणां नायकः गुहासमीपे उपविष्टं बलभद्रं दृष्ट्वा आश्चर्येण पृष्टवान्- "भवान् अत्र किमर्थं उपविष्टवान्?" इति।

"रामपुरं गच्छन् आसम्। निरन्तरगमनेन श्रान्तः। अतः विश्रान्त्यै अत्र उपविष्टवान्" इति उक्तवान् बलभद्रः।

तदा चोरनायकः संशयदृष्ट्या पश्यन् पृष्टवान्- "रामपुरं गन्तुम् इतः कः मार्गः?" इति।

"अहं मार्गभ्रष्टः अत्र आगतवान्। समीचीनं मार्गं सूचयतु। अहं तेन मार्गेण गच्छामि।"

अत्रान्तरे चोरेषु अन्यतमः प्रश्नं कृतवान्- "रामपुरे भवतः किं कार्यम्?" इति।

"तत्र मम पत्नी अस्ति" इति उक्तवान् बलभद्रः।

"ओह्, एवं वा? अहं रामपुरे सर्वान् जानामि। भवतः श्वशुरस्य नाम किम्?" इति पृष्टवान् सः चोरः।

"मम श्वशुरः दिवङ्गतः" इति बलभद्रः उक्तवान्।

"तर्हि भवतः पत्नी कस्मिन् गृहे निवसति?" इति पृष्टवान् अन्यः चोरः।

"एतत् ज्ञातुम् एव अहं रामपुरं प्रस्थितः। मम तु प्रबलः सन्देहः अस्ति यत् सा तत्र स्यात् वा न वा इति। तद्विषये अहं खिन्नः अपि। एतन्मध्ये भवतः सहस्रं प्रश्नाः" इति बलभद्रः असमाधानपूर्वकम् उक्तवान्।

तस्य उत्तरं श्रुत्वा धार्ष्ट्यं दृष्ट्वा च



चोराः आश्चर्यचकिताः। अरण्ये एतान् चोरान् दृष्ट्वा सर्वे भीताः भवन्ति स्म। किन्तु एषः पुरुषः निर्भीकः सन् सर्वेषां तर्जयन् अस्ति। अतः ते चिन्तितवन्तः- "प्रायः एषः एकाकी न। एतेन सह अन्येऽपि केचन स्युः" इति।

चोराणां सन्देहः अधिकः जातः। ते पुनरपि बहुविधप्रश्नान् पृष्टवन्तः। किन्तु बलभद्रः एकस्य अपि योग्यम् उत्तरं न दत्तवान्। कोपं प्रदर्शयन् ततः निर्गतः च।

तदा तेषु एकः स्वसहचरान् उक्तवान्- "सः यत् वदति तत्सर्वम् असत्यम्। तस्य धैर्यं दृष्ट्वा अहं चिन्तयामि यत् सः कश्चित् छद्मवेषधारी राजभटः स्यात् इति। एतादृशः



पुरुषः यदि अस्माभिः न सन्तोष्यते तर्हि अपायः निश्चितः'' इति।

अन्ये सर्वे तस्य विचारम् अङ्गीकृतवन्तः। अनन्तरं ते पञ्च अपि धावन्तः बलभद्रसमीपं गत्वा उक्तवन्तः- ''मित्र! वयं तु उदरपोषणार्थं एतां चोरवृत्तिम् आश्रित्य कथञ्चित् जीवामः। अस्माकं विषयम् अन्यान् न वदतु। प्रतिफल-रूपेण वयं यत्किञ्चित् अवश्यं दद्मः'' इति।

बलभद्रः आश्चर्यं प्रकटयन् पृष्टवान्- ''मां किं चिन्तयन्ति भवन्तः?'' इति।

''एतादृशम् अपायकरं स्थानम् आगत्य अपि भवान् धैर्येण व्यवहरन् कोपं प्रदर्शितवान् किल! एवं चेत् भवान् राजभटात् न अन्यः। भवान् इदानीम् अस्माकं वसतिस्थानम् आगत्य सर्वं ज्ञातवान् अपि। यदि वयं भवते किमपि कष्टं दद्मः तदा समीपे रहस्यरूपेण स्थिताः भवतः सहचराः अवश्यम् आक्रमणं करिष्यन्ति इति जानीमः। अतः एव महानुभाव! रक्षतु अस्मान्'' इति वदन् चोरनायकः त्वरया गुहां प्रविष्टवान्। अल्पे एव काले प्रत्यागत्य भारभूतम् एकं स्यूतं बलभद्रस्य हस्ते दत्तवान् च। तत्र कान्त्या प्रकाशमानानि अमूल्यानि रत्नानि आसन्।

बलभद्रः मौनं तं स्यूतं स्वीकृतवान्। अनन्तरं चोराः तं रामपुरस्य सीमां प्रापय्य ''चोराः दृष्टाः इति विषयः भवता एतत्क्षणे एव विस्मर्तव्यः। पुनः धनाशया अत्र न आगन्तव्यम् अपि। पुनः आगतः चेदपि प्रयोजनं न भवेत्। यतः वयम् अद्य एव अस्माकं वसतिं परिवर्त-यिष्यामः'' इति उक्त्वा अरण्यं प्रविष्टवन्तः।

चोराणां वचनानि अशृण्वन् इव बलभद्रः अग्रे गतवान्। द्वित्रान् पथिकान् मार्गं पृष्ट्वा रामपुरं प्राप्तवान् च। इतस्ततः विचारणेन सः ज्ञातवान् यत् एका नवीना स्त्री अत्र आगता अस्ति, सा गङ्गाधरस्य गृहे अस्ति इति। बलभद्रः साक्षात् गङ्गाधरस्य गृहं गतवान्।

तस्मिन् समये गङ्गाधरः कृषिकार्यं समाप्य तत्र आगतवान्। बलभद्रं दृष्ट्वा सः पृष्टवान्- ''कः भवान्? किम् इच्छति?'' इति।

बलभद्रः स्वपरिचयं उक्तवान्। शान्तायाः विषये पृष्टवान् च। गङ्गाधरः उक्तवान्- ''शान्ता उत्तमा स्त्री। प्रातः आरभ्य सायं

पर्यन्तं सा स्वयं विचिन्त्य किमपि कुर्वती भवति । विरामं न ईच्छति एव । एषा कर्मकरी अस्माकं भाग्यवशात् एव लब्धा'' इति ।

''अहं तया सह किञ्चित् वार्तालापं कर्तुम् इच्छामि'' । इति उक्तवान् बलभद्रः ।

गङ्गाधरः ताम् आहूतवान् । ताम् एकान्ते नीत्वा बलभद्रः पृष्टवान्- ''गृहे एतावन्ति कार्याणि भवन्ति स्म वा ? भवती तत्र सुखेन निवसति स्म । अत्र कर्मकरी इव दिनानि यापयति किल ? किम् एतत् रोचते ?'' इति ।

''अत्र अहम् अधिकं कार्यं करोमि, सत्यम् । किन्तु कोऽपि क्लेशः न अनुभूयते । यदि कश्चित् कार्यं दृष्ट्वा सन्तोषम् अनुभवति, मधुरवचनानि वदति च, तर्हि शारीरकश्रमः श्रमः एव न'' इति उक्तवती शान्ता ।

''भवत्याः कथनस्य आशयः यत् अहं भवत्याः कार्यस्य प्रशंसां न कृतवान् इति किल ? भवती किं जानाति- भवत्याः विषये मम कियती प्रीतिः अस्ति इति ?'' इति वदन् बलभद्रः तस्याः अन्वेषणे किं किं कृतवान्, कुत्र कुत्र गतवान् इत्यादिकं सर्वं निवेदितवान् । 'चोरभीतिम् अविगणय्य रात्रौ एकाकी अरण्य-मार्गेण आगतवान्' इत्यपि उक्तवान् ।

पत्युः मुखलक्षणेन एव 'एतेन उच्यमानं सर्वं सत्यम् एव । वचने कापि कपटता नास्ति' इति शान्ता ज्ञातवती । अतः सा किञ्चित् मृदुस्वरेण उक्तवती- ''तर्हि भवान् अत्र



एव आगच्छतु । भवान् एतस्य क्षेत्रे कार्यं करोतु । अहं गृहकार्याणि करोमि । उभयोः परिश्रमेण यत् सम्पाद्यते तेन जीवनं सुखमयं भविष्यति'' इति ।

''अद्य आरभ्य भवत्या अन्यगृहेषु कार्यं करणीयं नास्ति । विनाप्रयत्नेन मया यथेष्टं धनं सम्पादितम् । एतेन धनेन नगरे एकं भवनं क्रीत्वा सुखेन निवसावः'' इति उक्त-वान् बलभद्रः ।

बलभद्रस्य वचनेषु शान्तायाः विश्वासः नास्ति । सा उक्तवती- ''भवतः वचनम् असत्यम् । माम् इतः नेतुम् इच्छन् भवान् एवं वदति'' इति ।

''तर्हि स्वयं पश्यतु तावत्'' इति वदन् बलभद्रः स्यूतम् उद्घाटितवान् । रत्नानि

शान्तायै प्रदर्शितवान् च।

रत्नानि दृष्ट्वा शान्ता क्षणकालं स्तब्धा। सा आश्चर्येण पृष्टवती- "एतानि भवता कुतः लब्धानि? केन उपायेन प्राप्तानि ?" इति।

"भवती मम कोपशीलतयाः निन्दां करोति किल? पश्यतु, इदानीं तस्य एव कोपस्य कारणेन एतानि मया प्राप्तानि। मम कोपेन भीताः चोराः स्वयम् एतानि सर्वाणि आनीय दत्तवन्तः" इति वदन् बलभद्रः मार्गे प्रवृत्तं चोरवृत्तान्तं समग्रं निवेदितवान्।

पत्युः वचनं श्रुत्वा भीतिं प्रकटयन्ती शान्ता उक्तवती- "अहं भवतः वचनम् इतः-परं किमपि न अनुसरामि। भवतः क्रोधेन तप्ता अहं गृहं परित्यज्य आगतवती। हन्त! मया चिन्तितम् आसीत्- 'अल्पे एव काले भवान् विवेकं प्राप्नोति, क्रोधं दूरीकरिष्यति च' इति। किन्तु भवान् तु पूर्ववदेव अस्ति। क्रोधकारणेन एव ऐश्वर्यं प्राप्तम् इति गर्वः अपि अस्ति! एवं चेत् भवान् कदाचित् अपि कोपमुक्तः न भविष्यति एव। अतः गृहं प्रति प्रत्यागमनस्य प्रस्तावः एव दूरङ्गतः" इति।

शान्तायाः वचनं श्रुत्वा खेदं प्रदर्शयन् बलभद्रः उक्तवान्- "शान्ते! अविचार्य एवं न वदतु। कोपः केवलं भाग्यकारणं न, अपि तु दौर्भाग्यस्य अपि कारणं भविष्यति इति अहम् इदानीं सम्यक् ज्ञातवान्। अदृष्टम् एकवारम् आगतम। पर्याप्तम् तत्। दुरदृष्टं तु सोढुम् अशक्यम्। पश्यतु, इतः परं कदापि विनाकारणं कोपं न प्रदर्शयिष्यामि। इदानीं गृहं गच्छावः तावत्" इति।

"गृहत्यागानन्तरं प्राप्तेन अनुभवेन एषः सम्यक् शिक्षितः। कोपनिग्रहणं ज्ञातवान्। यदि एवं न स्यात् तर्हि मम गृहागमननिराकरणं श्रुत्वा क्रुद्धः अभविष्यत्" इति शान्ता आलोचितवती।

एवं चिन्तयित्वा सा सन्तोषेण पत्या सह स्वग्रामं प्रति प्रस्थिता।





# चतुरः सेवकः

धर्मपुरे सोमेश्वरः नाम भूस्वामी आसीत् । निद्रालुः सः प्रातः उत्थाने बहु क्लेशम् अनुभवति स्म । अतः सः अपेक्षिते समये उत्थातुं न शक्नोति स्म । तेन च तदीयानि बहूनि कार्याणि समये न समाप्यन्ते स्म । अविचिन्तिताः क्लेशाः आपतन्ति स्म च ।

बहुचिन्तनानन्तरं सः भूस्वामी- 'समये जागरयितुम् एकः समर्थः सेवकः नियोजनीयः' इति निश्चितवान् । स्वनिश्चयं आप्तसचिवाय निवेदितवान् च । आप्तसचिवः योग्यं पुरुषम् अन्वेष्टुम् आरब्धवान् । तदा अनन्तनामकः युवकः 'एतदुद्योगार्थं ममः नाम सूचनीयम्' इति प्रार्थितवान् । आप्तसचिवः अनन्तं भूस्वामिनः समीपं नीतवान् ।

भूस्वामी अनन्तम् उक्तवान्- "श्वः प्रातः चतुर्वादने मया नरसिंहपुरं गन्तव्यम् । अतः चतुर्वादने जागरयतु" इति ।

प्रातः युक्ते काले अनन्तः भूस्वामिनम् उत्थापितवान् । भूस्वामी स्वकार्यार्थं गतवान् ।

सायं नरसिंहपुरतः प्रत्यागतः सोमेश्वरः अनन्तम् उक्तवान्- "अद्य अहं समये गन्तुं शक्तवान् । अतः कार्यं सुसम्पन्नम् । श्वः प्रातः मया जगन्नाथपुरं गन्तव्यम् । अतः श्वः पञ्चवादने उत्थापयतु" इति ।

एतदनुसारम् अनन्तः भूस्वामिनं पञ्चवादने उत्थापितवान् ।

तद्दिने रात्रौ भूस्वामी जगन्नाथपुरतः प्रत्यागतवान् । अनन्तम् आहूय- "भवान् उत्तमः सेवकः । श्वः नूतनमासस्य आरम्भः । भवान् इदानीं दिनद्वयं कार्यं कृतवान् किल ? अतः दिनद्वयस्य वेतनं चत्वारि रूप्यकाणि स्वीकरोतु । आगामिमासस्य अन्ते मासिकवेतनरूपेण षष्टि-रूप्यकाणि दास्यामि । अस्तु किल ?" इति वदन् तस्मै चत्वारि रूप्यकाणि दत्तवान् ।

अनन्तरं भूस्वामी गृहस्य अन्तः गतवान् । वस्त्रं परिवृत्य यदा सः बहिः आगतवान् तदा सः दृष्टवान् यत् अनन्तः कस्यचित् युवकस्य हस्ते रूप्यकद्वयं यच्छन् अस्ति । "दिनद्वयस्य वेतनरूपेण चत्वारि रूप्यकाणि प्राप्तानि आसन्" इति वचनम् अपि तेन श्रुतम् ।

भूस्वामी आश्चर्येण- "सः युवकः कः ? किमर्थं तस्मै रूप्यकद्वयं दत्तवान् ?" इति पृष्टवान् ।

सम्भ्रान्तः अनन्तः- "श्रीमन् ! किमपि न, सः . . . मम . . ." इति वचसा स्खलन् उक्तवान् ।

भूस्वामी कोपेन- "वस्तुस्थितिं निवेदयितुं किमर्थं कष्टम् ? सङ्कोचः किमर्थम् ? वदतु तावत्" इति उक्तवान् ।

अनन्तः कम्पमानस्वरेण उक्तवान्- "श्रीमन्, दिनद्वयम् अपि भवतः उत्थापनात् पञ्चदश-निमेषेभ्यः पूर्वम् एषः माम् उत्थापयति स्म । अतः प्राप्ते धने अर्धम् एतस्मै यच्छन् अस्मि । तथा आवयोः मध्ये नियमः अङ्गीकृतः आसीत्" इति ।

एतेन भूस्वामी ज्ञातवान् यत् अनन्तः अपि जागरणविषये मत्सदृशः एव इति । तथापि अनन्तस्य चातुर्यं स्मृत्वा मनसि एव हसन् उक्तवान्- "अये अनन्त ! श्वः आरभ्य भवान् मम उद्यानस्य जलसेचनकार्यं करोतु । वेतनं तु तावदेव दास्यामि । वेतने कापि न्यूनता न भविष्यति" इति । अनन्तरं सः तं नवयुवकं पश्यन् उक्तवान्- "दिनद्वयतः अनन्तः मम जागरणकार्यं यत् कृतवान् तत् कर्तुं भवान् इच्छति वा ?" इति ।

सः स्वीकृतिं सूचयन् शिरः चालितवान् । तदा भूस्वामी तं परीक्षादृष्ट्या पश्यन् मन्दहास-पूर्वकं पृष्टवान्- "इदानीं भवता प्राप्ते रूप्यक-द्वये अन्यस्य भागः नास्ति किल ?" इति ।

भूस्वामिनः अर्थगर्भितं प्रश्नं श्रुत्वा नव-युवकः विश्वासपूर्वकम् उक्तवान्- "न श्रीमन् ! रूप्यकद्वयं तत् पूर्णतया मदीयम् एव" इति ।






सतीदेवी नन्दीश्वरेण सह दक्षस्य यज्ञशालां प्रविष्टितवती। तदीया माता प्रसूतिः तथा सहोदराः च अग्रे आगत्य सत्कारं कृतवन्तः। योगक्षेमं पृष्टवन्तः च। एतदनन्तरं माता प्रसूतिः सतीदेवीं पृथक् आहूय एकान्ते उक्तवती- "पुत्रि! भवत्याः पिता क्रुद्धः अस्ति। भवत्याः पतिं निन्दन् अस्ति। भवती एतत्सर्वं गम्भीरतया न परिगणयतु" इति। अनन्तरं तां यज्ञशालां नीतवती च।

यज्ञशालां प्रविशन्तीं पुत्रीं दृष्ट्वा दक्षस्य कोपः प्रज्वलितः। सः पुत्रीम् उक्तवान्- "भवती किमर्थम् आगतवती? केन वा आमन्त्रणं दत्तम्? भवत्याः पतिः श्मशानवासी, पिशाचानां नायकः च। कपालधारी सः निश्चयेन अपवित्रः। यज्ञे भागं वोढुं तस्य अधिकारः नास्ति। अतः एव तस्मै आमन्त्रणं न दत्तवान्। यज्ञभागं न ददामि अपि। तस्य पत्नी भवती अपि अपवित्रा एव। विना आमन्त्रणम् आगतवत्याः भवत्याः कियत् दाष्टर्यम्? यज्ञम् अपवित्रं कर्तुम् आगतवती वा भवती?" इति।

पितुः वचनेन कुपिता सतीदेवी उक्तवती- "यज्ञकर्तुः शिवस्य अनुपस्थितौ यज्ञः कथं निर्विघ्नं प्रचलेत्? भवान् तं निन्दन् अपि अस्ति। तात! इदानीम् अपि समयः न अतिक्रान्तः। शिवं यज्ञार्थं निमन्त्रयतु। हविर्भागदानपूर्वकं तस्य सत्कारं करोतु। अन्यथा यज्ञः अपूर्णः भविष्यति। सर्वनाशः



अपि भवेत्'' इति।

'सतीदेवी यत् उक्तवती तस्य आचरणम् उचितम्' इति भृगुप्रभृतयः महर्षयः दक्षं बोधितवन्तः।

सतीदेव्याः वचनेन ऋषीणां हितोपदेशेन च दक्षस्य क्रोधः प्रवृद्धः। सः आक्रोशनं कुर्वन् इव सतीदेवीम् उक्तवान्- ''भवत्याः दर्शनम् एव पापकरम्। भवती एतत्क्षणे एव यज्ञशालातः निर्गच्छतु। अन्यथा अहम् एव भवतीं निष्कासयामि'' इति।

स्वस्य पत्युः च निन्दनं श्रुतवत्याः सतीदेव्याः हृदयं दग्धम् इव। ''पत्युः हितवचनानि अविगणय्य आगता अहं मूर्खताम् आचरितवती। मत्कारणतः एव मम पत्युः निन्दावचनानि सर्वैः श्रुतानि। पित्रा अपमानिता अहं पत्ये कथं मुखं प्रदर्शयामि?'' इति चिन्तितवती सतीदेवी। अतः सा आगामिजन्मनि अपि शिवः एव मम पतिः भवतु इति सम्प्रार्थ्य योगमायया अग्निं उत्पाद्य तत्र पञ्चप्राणान् अपि आहुतिरूपेण समर्पितवती।

एतेन यज्ञशालायां हाहाकारः समुत्पन्नः। खेदं प्रकटयन्तः निन्दावचनानि वदन्तः च नन्दीश्वरादयः यज्ञवेदिकां प्रवेष्टुं प्रयत्नं कृतवन्तः। किन्तु भृगुमहर्षिः अभिचारहोमं कृत्वा तेषां प्रवेशं निवारितवान्।

अत्रान्तरे देवर्षिः नारदः कैलासं गत्वा ईश्वराय प्रवृत्तं सर्वं निवेदितवान्। क्रोधाविष्टः शिवः घोरं हुङ्कारं कुर्वन् एकां जटाम् उन्मूल्य तया पर्वतं ताडितवान्। एतया जटया भद्रकाली वीरभद्रश्च समुत्पन्नौ। वीरभद्रस्य सहस्रं बाहवः। सूर्यसमप्रभस्य तस्य रूपम् अतीव भयङ्करम् आसीत्। सः शिवं प्रणम्य उक्तवान् ''पितृदेव! मया किं करणीयम् इति आदिशतु। भवता आज्ञप्तं कार्यं येन केनापि प्रकारेण साधयामि एव'' इति।

''पुत्र वीरभद्र! भवान् भद्रकाल्या सह गत्वा दक्षयज्ञस्य ध्वंसनं करोतु। यज्ञे ये भागं गृहीतवन्तः तान् सम्यक् शिक्षयतु'' इति शिवः आदिष्टवान्।

शिवस्य आज्ञां प्राप्य वीरभद्रः रथम्

आरूढवान्। नन्दीश्वर-चण्डीश्वर-भैरवादिभिः गणप्रमुखैः सह प्रस्थितः च। भद्रकाली तु सिंहम् आरुह्य महाकाली-गौरी-कात्यायनी-चामुण्डादिभिः महाशक्तिभिः सह प्रस्थिता।

इदानीं दक्षस्य यज्ञशालायां बहवः उत्पाताः प्रवृत्ताः। उल्कापातः जातः। रक्तवृष्टिः जाता। सर्प-वृश्चिकादयः क्रूरजन्तवः सर्वत्र व्याप्ताः। यज्ञशालायाम् उपस्थिताः केचन दक्षस्य निन्दनं कर्तुम् आरब्धवन्तः। केचन प्राणभीत्या पलायितवन्तः।



वीरभद्रस्य गणः यज्ञशालायाः उपरि आ-क्रमणम् अकरोत्। गणीयाः ते यज्ञशालातः धावतः जनान् सम्यक् पीडितवन्तः। वीरभद्रः गणप्रमुखैः सह गत्वा यज्ञवेदिकां प्रविष्टवान्। तत्र देवताः ऋषयः च उपविष्टाः आसन्। तान् सर्वान् ते सम्यक् ताडितवन्तः। दक्षं दृष्ट्वा स्वजन्मदातुः शिवस्य अपमानं स्मरतः वीरभद्रस्य कोपः प्रज्वलितः। सः विकराल-रूपम् आश्रित्य एकेन एव खड्गप्रहारेण दक्षस्य शिरः छित्त्वा यज्ञकुण्डे क्षिप्तवान्।

अनन्तरं सः ऋत्विजः देवताः अन्यजनान् च उद्दिश्य "भवन्तः ईश्वरविरोधिनः दक्षस्य यज्ञे भागं गृहीतवन्तः किल? तस्य फलम् इदानीम् अनुभवन्तु" इति वदन्, तान् विविधप्रकारैः पीडितवान्।

तदा दक्षस्य पत्नी प्रसूतिः तत्र आगत्य शान्त्यर्थं वीरभद्रं प्रार्थितवती। तेन शान्तः वीरभद्रः भद्रकाल्या सह, स्वगणेन सह च कैलासं प्रतिगतवान्। सर्वे कैलासम् आगत्य शिवं भक्त्या प्रणम्य एकत्र स्थितवन्तः।

अत्रान्तरे वीरभद्रेण पीडिताः देवाः ऋषयः च समूहरूपेण ब्रह्मणः समीपं गतवन्तः। ब्रह्माणं समग्रं वृत्तान्तं निवेदितवन्तः च। ब्रह्मा तैः सह वैकुण्ठं गतवान्। वीरभद्रेण कृतं दक्षस्य मारणं, दक्षयज्ञस्य ध्वंसनं च विष्णवे निवेदितवान्। अनन्तरं विष्णुसहिताः सर्वे कैलासं गतवन्तः। तदा शिवः समाधिमग्नः आसीत्। तं परितः वीरभद्रादयः स्थिताः आसन्।



'ब्रह्मविष्णुसहिताः देवाः ऋषयः च आगताः सन्ति' इति ज्ञात्वा शिवः नेत्रे उन्मीलितवान्। सर्वान् उपवेष्टुं सूचितवान् च।

विष्णुः शिवं निवेदितवान्- "सदाशिव! कोपः दुःखं च त्यक्तव्यं भवता। प्रकृतिमायया वशीकृतः मा भवतु। भवद्विषयकद्वेषेण दक्षः अनुरूपं फलं प्राप्तवान्। किन्तु यदि दक्षेण आरब्धस्य यज्ञस्य परिसमाप्तिः न भविष्यति तर्हि लोके वृष्टिः वा धान्यवृद्धिः वा न भविष्यति। सर्वत्र विनाशः ताण्डवनृत्यं करिष्यति। अतः भवान् कृपया दक्षम् उज्जीवयतु। यज्ञं परिसमापयितुं अवकाशं कल्पयतु" इति।

शिवः तेषां अनुरोधम् अङ्गीकृतवान्, उक्तवान् च- "वयं सर्वे सम्भूय दक्षयज्ञं समापयामः। लोकहितं साधयामः" इति।

ब्रह्मविष्णुमहेश्वराः देवगणैः ऋषिगणैः च सह यदा दक्षस्य यज्ञशालां प्रविष्टवन्तः तदा तत्र परिसरः बीभत्सजनकः आसीत्। अग्निकुण्डे पतितं दक्षस्य शिरः तु सम्पूर्णं दग्धम् आसीत्।

एतत् दृष्ट्वा शिवः वीरभद्रम् आज्ञापितवान्- "भवान् उत्तरदिशं गच्छतु। तत्र यः कोऽपि प्राणी उत्तरदिशि शिरः संस्थाप्य शयनं कृतवान् लब्धः चेत् तस्य शिरः कर्तयित्वा आनयतु" इति।

वीरभद्रः कस्यचित् मेषस्य शिरः आनीतवान्। शिवः दक्षस्य शरीरेण तत् योजयित्वा दक्षम् उज्जीवितवान्। दक्षद्वारा यज्ञः विधिपूर्वकं समाप्तः। यज्ञसमाप्तेः अनन्तरं दक्षः क्षमायाचनपूर्वकं शिवं प्रार्थितवान्- "अहं भवतः महिमानम् अजानन् निन्दां कृतवान्। येन मुखेन निन्दा कृता तेन मुखेन इदानीं वञ्चितः अस्मि। भवतः अनुग्रहेण अहं जीवितः, विवेकं प्राप्तवान् च। कृपया क्षाम्यतु भवान्" इति।

क्षमादानपूर्वकं शिवः उक्तवान्- "यत् प्रवृत्तं तत् गतम् एव। इदानीं भवान् किमपि वरं प्रष्टुम् अर्हति" इति।

तदा दक्षः पत्नीपुत्रादीनाम् आशयं प्रकटीकृतवान् यत् यत्र यज्ञः प्रवृत्तः स च प्रदेशः

‘दक्षवाटिका’ नाम्ना प्रसिद्धः भवतु। अत्र एव कश्चन ‘शिवालयः’ अपि भवतु इति।

शिवः दक्षस्य प्रार्थनां ससन्तोषम् अङ्गीकृत्य भद्रकालीं वीरभद्रं च उक्तवान्- “एतस्य प्रदेशस्य आग्नेयदिशि गौतमीनदी प्रवहति। तस्याः तीरे गणसहितयोः भवतोः निवासः भवतु” इति। भद्रकाली कालभद्रः च गणनायकौ सञ्जातौ।

एतदनन्तरं शिवः सतीदेव्याः शरीरं स्वीकृत्य कैलासपर्वतं गतवान्। विष्णुब्रह्मादयः अपि शिवस्य अनुज्ञां प्राप्य स्वप्रदेशं गतवन्तः। शिवः सतीदेव्याः शरीरं पार्श्वे संस्थाप्य तपः तप्तुम् आरब्धवान्।

दक्षस्य अन्या पुत्री स्वधा पितृदेवतानां पत्नी जाता। तस्याः मेना धन्या कलावती इति तिस्रः पुत्र्यः जाताः। ताः तिस्रः अपि अत्यन्तरूपवत्यः। लोके सर्वत्र सञ्चरन्त्यः ताः सुखेन आसन्।

एकदा एताः तिस्रः कन्यकाः विष्णोः लक्ष्म्याः च दर्शनार्थं गताः। तत्र ताः गीतेन नृत्येन च तोषितवत्यः। तत्सन्दर्भे ब्रह्मणः मानसपुत्राः सनकसनन्दादयः तत्र समागताः। आगतान् तान् दृष्ट्वा विष्णुः इतरे च उत्थाय स्वागतीकृत्य गौरवभावं प्रदर्शितवन्तः। किन्तु मेना-धन्या-कलावत्यः तु आसनात् न उत्थिताः।



तासाम् औद्धत्येन कुपितः सनत्कुमारः ताः शप्तवान्- “भवतीनाम् अहङ्कारः अधिकः जातः। भवत्यः स्वर्गे निवासंकर्तुम् अनर्हाः। अतः तिस्रः अपि भूलोकवासिभिः परिणीताः भवन्तु” इति।

इदानीं तिस्रः अपि पश्चात्तापं प्रकटितवत्यः। ताः सनत्कुमारं प्रणम्य प्रार्थितवत्यः- “महात्मन्! वयम् अज्ञानेन अनादरं कृतवत्यः। कृपया क्षाम्यतु। अस्मान् शापमुक्ताः करोतु” इति।

तेन शान्तः मुनिः उक्तवान्- “गर्वस्य प्रायश्चित्तं मानभङ्गः एव। शापः तु प्रतिस्वीकर्तुं न शक्यते। किन्तु एतस्य शापस्य कारणतः लोककल्याणं भविष्यति” इति।



(कालान्तरे त्रयः महापुरुषाः एतासां पुत्रीः परिणीतवन्तः। हिमवतः पत्न्यां मेनायाम् उत्पन्नां पार्वतीं शिवः परिणीतवान्। जनकपत्न्याः धन्यायाः पुत्रीं सीतां रामः परिणीतवान्। वृषभकलावत्योः पुत्रीं राधां कृष्णः परिणीतवान्। एवं च लोककल्याणं सिद्धम।)

'शापेन अपि मङ्गलम् एव सिध्यति' इति ज्ञात्वा ताः कन्यकाः खेदं दूरीकृतवत्यः। विष्णोः लक्ष्म्याः च अनुमतिं स्वीकृत्य ततः स्वनगरं निर्गताः च।

पर्वतानां राजा हिमालयः अतीव सुन्दरः। सः स्वपर्वते स्थितेषु आश्रमेषु सर्वत्र सञ्चरति स्म। तत्र निवसतां देवगन्धर्वाणां ऋषिमुनीनां च योगक्षेमं विचारयति स्म। लोपदूरीकरणार्थं सर्वदा उद्युक्तः भवति स्म। अतः ते सर्वे मेना-हिमालययोः विवाहं कृतवन्तः।

एकदा इन्द्रविष्णुब्रह्मादयः देवाः हिमालयस्य गृहम् आगतवन्तः। हिमालयः गौरवपूर्वकं तेषां सत्कारं कृत्वा उचितेषु आसनेषु तान् उपवेशितवान्। तेषाम् आगमनस्य कारणं पृष्टवान् च।

तदा देवाः आगमनकारणं निवेदितवन्तः- ''महाशक्त्या सतीनाम्ना दक्षस्य गृहे जन्म प्राप्तम् आसीत्। सतीशिवयोः विवाह सम्पन्नः। दक्षयज्ञे प्रवृत्तं पत्युः अपमाननं सोढुम् अशक्ता सतीदेवी आत्मसमर्पणं कृतवती। सतीदेव्याः वियोगेन तप्तः शिवः तपसि लीनः जातः। इदानीं तस्य समाधेः भङ्गः एव नास्ति। असुराणां राजा तारकासुरः तु सर्वत्र जनान् पीडयन् अस्ति। यावत्पर्यन्तं महाशक्तिः पुनरपि जन्म प्राप्य शिवेन परिणीता भूत्वा एकं पुत्रं न जनयिष्यति तावत्पर्यन्तं तारकासुरः जनान् पीडयिष्यति एव। अतः भवान् मेनकया सह महाशक्तेः उपासनां करोतु। 'भवती मम पुत्रीरूपेण जन्म प्राप्नोतु' इति तां साग्रहं प्रार्थयतु'' इति।

हिमालयः एतत् अङ्गीकृतवान्।

एतदनन्तरं इन्द्रविष्णुब्रह्मादयः विन्ध्यपर्वतं गत्वा भक्तिपूर्वकं तत्र निवसन्त्याः महादेव्याः स्तोत्रं कृतवन्तः।

स्वप्रभया सर्वाः दिशः उद्दीपयन्ती, उज्वल-किरीटधारिणी देवी प्रत्यक्षा जाता। सहस्रहस्ता सा त्रिशूलादीनि अनेकानि आयुधानि धृतवती आसीत्। तां दृष्ट्वा ब्रह्मादयः देवाः प्रार्थित-वन्त- ''मातः! भवती दक्षस्य पुत्री भूत्वा सतीदेवीरूपेण जन्म प्राप्य शिवं परिणीतवती। अनन्तरं दक्षयज्ञे आत्मानम् आहुतिं दत्तवती। इदानीं वियोगतप्तः शिवः समाधिमग्नः अस्ति। अतः असुराणां राजा तारकासुरः उच्छृङ्खलः सन् समस्तलोकं पीडयन् अस्ति। जगदम्ब! भवती मेनाहिमालययोः पुत्रीरूपेण जन्म प्राप्नोतु तयोः गृहं पवत्रीकरोतु च। शिवेन भवत्याम् उत्पादितः पुत्रः तारकासुरस्य वधं करिष्यति। एतेन लोकोपकारः भविष्यति'' इति।

'भवताम् अभिलाषं निश्चयेन पूरयिष्यामि' इति अभयवचनानि उक्त्वा महादेवी अदृश्यतां गता।

ब्रह्मादीनां उपदेशानुसारं हिमालयः मेनया सह तपः तप्तुं निश्चितवान्।

ज्योतिषिकानां सूचनां सम्प्राप्य श्रेष्ठः मुहूर्तः निश्चितः। गुरुवृद्धानाम् आदेशानुसारं उपवासादिकठोरनियमाः आश्रिताः। चैत्रशुक्ल-प्रथमातिथौ तौ तपः आरब्धवन्तौ। सप्त-विंशतिसप्ताहान् यावत् तौ भक्तिपूर्वकं महा-शक्त्याः उपासनां कृतवन्तौ।

एतेन महाशक्तिः सन्तुष्टा। सा प्रत्यक्षीभूय 'यत् अपेक्षितं तत् प्रार्थयताम्' इति सूचितवती।

तदा मेना हिमालयः च प्रार्थितवन्तौ- ''जगन्मातः! भवत्याः दर्शनेन आवां धन्यौ। गुणसम्पन्नानां पराक्रमिणां शतपुत्राणां दानेन आवाम् अनुगृह्णातु। भवती आवयोः पुत्रीरूपेण जन्म प्राप्य शिवस्य पत्नी भवतु। आवां शाश्वतकीर्तिपात्रे करोतु। मालायां स्थितं सूत्रं यथा पुष्पाणां सहवासेन देवस्य शिरसि स्थानं प्राप्नोति तथैव भवत्याः जन्मना आवाम् अपि पुण्यवन्तौ भविष्यावः'' इति।

महादेवी 'भवतोः इष्टं पूरयिष्यामि' इति उक्त्वा अदृश्यतां गता।





# साक्षी खर्जूरीटः

बाग्दादसमीपे पर्वतप्रदेशे शक्तिशाली युवकः चोरः निवसति स्म। सः वायुवेगेन खड्गं चालयितुं समर्थः, विद्युद्वेगेन गन्तुं समर्थः च। अन्येषां प्राणहरणं नाम तस्य जलपानम् इव सुकरम्। सः केन मार्गेण आगत्य कदा आक्रमणं कुर्यात् इति कोऽपि न जानाति स्म। तस्य बन्धनं तु सर्वथा दुष्करम् आसीत्।

तत्पर्वतप्रदेशस्य मार्गे यदि कश्चित् गच्छति तर्हि तस्य आयुः समाप्तम् इव। एषः चोरः तदुपरि आक्रमणं कृत्वा धनादिकम् अपहृत्य खड्गेन तस्य शिरच्छेदं करोति स्म। एषः एव क्रमः बहुभ्यः वर्षेभ्यः प्रचलति स्म।

एकदा सायङ्काले कश्चन वृद्धः यात्रिकः तेन मार्गेण आगतवान्। सः अन्यप्रान्तीयः आसीत्। स्वकीयं सम्पादनं समग्रं स्वीकृत्य पुत्र्याः गृहं गच्छन् आसीत् सः।

शिलानां मध्यतः उत्प्लुत्य आगतः चोरः वृद्धस्य पुरतः स्थित्वा खड्गम् इतस्ततः चालयन् उक्तवान्- "अये वृद्ध! तिष्ठतु। भवतः मरणम् आसन्नम्। देवनाम स्मरतु तावत्"

"किं वदति भवान्?" इति दिग्भ्रान्तः वृद्धः पृष्टवान्। "भवतः समीपे विद्यमानं धनं सर्वम् अत्र ददातु प्रथमम्" इति गर्जितवान् चोरः।

भयेन कम्पमानः वृद्धः दैन्यं प्रदर्शयन् उक्तवान्- "अये पुत्र! अस्मिन् स्यूते यत् धनं अस्ति तत् मया महता कष्टेन सम्पादितम्। पत्नीमरणानन्तरम् इदानीम् अहं पुत्र्याः गृहं गच्छन् अस्मि। वार्धक्ये कोऽपि आश्रयः भवेत् किल? एवं कुर्मः, अत्र अर्धं भवते ददामि। अवशिष्टम् अर्धम् अहं नयामि।"

वृद्धस्य वचनं श्रुत्वा विकटाट्टहासं प्रदर्शयन् चोरः उक्तवान्- "एतत् मम व्यवहारविरुद्धम्।

"अरेबिया कथा"



यात्रिकस्य हस्ते यद्यत् भवति तत्सर्वं मदीयम् एव। सर्वस्वापहारः इत्येषः मम नियमः''।

'एतस्य पुरतः परिस्थितेः निवेदनं वा विनम्रतापूर्वकं प्रार्थनं वा अरण्यरोदनम् इव व्यर्थम्' इति चिन्तितवान् वृद्धः।

अतः सः असहनया चोरम् उक्तवान्- ''वृद्धः अहम् असहायः। अस्तु तावत्। एतत् सर्वस्वम् स्वीकरोतु। अहं मम मार्गम् अनुसरामि'' इति।

चोरः धनं स्वीकृत्य पुनः अपि अट्टहासं प्रदर्शयन् उक्तवान्- ''गमनं कुत्र? इतः परं गमनं यमलोकं प्रति। अन्यत्र गन्तुं प्राणाः भवेयुः किल प्रथमम्?''

''कः एषः न्यायः? महता कष्टेन सम्पादितं सर्वम् अहं दत्तवान्। तत्सर्वं स्वीकृत्य मां मारयति अपि वा? कः लाभः एतेन? केवलं पापं सम्पादितं भवेत्। किं पापी भवितुम् इच्छति?''

''पापं पुण्यम् इति विवेचनं भवतः, न मम। यस्य हस्तात् धनं स्वीकृतं तस्य मारणं मम अभ्यासः''।

एवम् उक्त्वा चोरः खड्गम् उन्नीतवान्। एतत् दृष्ट्वा वृद्धः व्याघ्रात् भीतः हरिणः इव कातरदृष्टिं परितः प्रसारितवान्। अरण्ये साहाय्यार्थं कः वा भवेत्?

इदानीं भगवतः प्रार्थनां विना अन्यः मार्गः नास्ति एव। अतः वृद्धः भूमौ जानुना उपविश्य भगवन्तं स्मरन् मुखम् उन्नीतवान्। उपरि आकाशे एकः खञ्जरीटपक्षी उड्डयमानः आसीत्।

वृद्धः उच्चस्वरेण- ''अये खञ्जरीटपक्षिन्! भवान् एव एतस्य अत्याचारस्य साक्षी। विना विरोधं मदीयं सर्वस्वम् अहं दत्तवान्। तथापि एषः विनाकारणं मां मारयन् अस्ति। भवान् एव अत्र न्यायान्यायं विवेचयतु'' इति उक्तवान्।

वृद्धस्य वचनं यावत् न समाप्तं, तावत् एव चोरः खड्गेन तस्य शिरच्छेदनं कृतवान्।

एतदनन्तरं वर्षद्वयम् अतीतम्। लुण्ठनद्वारा चोरः यथेष्टं धनं सम्पादितवान्। तदा तस्य मनसि कीर्तिः सम्पादनीया इति इच्छा

समुत्पन्ना । अतः सः अरण्यं परित्यज्य राजधानीं गतवान् । तत्र विशालं भवनं स्वीकृत्य वासं आरब्धवान् । तद्देशीयस्य महाराजस्य चतुरङ्गे महती आसक्तिः । एषः चोरः तु चतुरङ्गे निपुणः । समानशीलत्वात् अतिशीघ्रम् एव तयोः मध्ये मैत्री उत्पन्ना ।

कालान्तरे मैत्री गाढताम् आप्ता । इदानीं उभयोः अपि वसतिः विशेषतया अन्तःपुरे एव । भोजनं, सुरायाः आस्वादनं, मञ्चे उपविश्य क्रीडनम्- एतावादेव तयोः जीवनम् ! चोरः मध्ये मध्ये रसवत्तया चोरजीवनस्य अनुभवं वदति स्म । किन्तु चोरेण एका जागरूकता आश्रिता आसीत् यत् वार्तालाप-मध्ये कदापि आत्मनः चोरत्वं न प्रकटीकृतम् । 'केचन चोराः एवं कुर्वन्ति' इति वदन् सः चोरकथां विवृणोति स्म ।

एकदा रात्रौ भूरिभोजनम् आसीत् । चोरः सामर्थ्यम् अतिक्रम्य मदिरां पीतवान् । तदा सेवकः कश्चित् तयोः पुरतः पक्वं खञ्जरीट-पक्षिमांसम् आनीय परिवेषितवान् । पक्वम् अपि पक्षिस्वरूपम् अखण्डम् आसीत् । तत् दृष्ट्वा चोरः करताडनपूर्वकम् उच्चैः हसन्- 'अये खञ्जरीट ! किं साक्ष्यं वदति भवान् ? यस्य विरुद्धं साक्ष्यं वक्तव्यम् आसीत् तस्य एव उदरं प्रविशन् अस्ति भवान्'' इति किमपि किमपि उक्तवान् ।

तदा महाराजः- ''किमर्थं हसति भवान् ? खञ्जरीटं दृष्ट्वा एव किमर्थं हसति ? माम् अपि-



वदतु। अहम् अपि सन्तोषम् अनुभवामि" इति उक्तवान्।

"विशेषः कोऽपि नास्ति। मरणासन्नः पुरुषः तृणम् अपि साहाय्यार्थं गृह्णाति इत्यत्र सः वृद्धः एव प्रमाणम्। यदा अहं तं वृद्धं मारयितुम् उद्युक्तः तदा सः एतं खञ्जरीटपक्षिणं दृष्ट्वा 'अये खञ्जरीट! भवान् एव साक्षी' इति वदन् प्राणान् त्यक्तवान्। प्राणान् त्यक्तवान् इति किमर्थम्? अहम् एव तं मारितवान्" इति वदन् चोरः स्वकीयस्य पूर्वतनजीवनस्य विवरण दत्तवान्। "गतजन्मनि कृतम् अकार्यम् अस्मिन् जन्मानि कोऽपि न परिगणयति किल?" इत्यपि समर्थितवान् सः।

एतत् श्रुतवतः महाराजस्य नेत्रद्वयं रक्तमयं जातम्। "बहोः कालत् यस्य अन्वेषणे कृते अपि अहं विफलः, सः एव चोरः एषः! एषु दिनेषु चोरस्य पीडा शान्ता, अतः सः अन्यत्र गतः इति मया निश्चितम् आसीत्। किन्तु किम् एतत् चित्रम्! मम गृहे, मया सह एव तस्य वासः!"

महाराजः कोपेन- "दुष्ट! स्थगयतु भवतः हासम्" इति गर्जितवान्।

सम्भ्रान्तः चोरः- "किं जातम्?" इति आश्चर्येण पृष्टवान्। "किं जातम् इति? खञ्जरीटेन भवतः चौर्यं प्रमाणीकृतम्। यस्य बन्धनविषये अहम् अहोरात्रं चिन्तयन् आसम्, सः एव भवान्! वृद्धेन साक्षित्वेन एतस्य पक्षिणः नियोजनं यत् कृतं तत् युक्तम् एव जातम्। वेषान्तरधारणेन पुरुषः अन्यः न भवति। कृतस्य पापस्य प्रायश्चित्तं भवेत् एव" इति वदन् महाराजः सेवकान् आहूतवान्।

आगतान् सेवकान् महाराजः आज्ञापितवान्- "एतं नराधमं नीत्वा शूलम् आरोपयन्तु" इति।

चोरस्य शिरश्चेदः जातः। मरणसमये खञ्जरीटपक्षिणः साक्षित्वं यत् प्रार्थितं तत् सफलं जातम् इति कृत्वा वृद्धस्य आत्मा सन्तृप्तः अभवत्।



पक्षिणः पशवः च –

# विनाशपथम् अनुसरन्तः...!

प्रकृत्या बहुप्रकारकाः प्राणिनः सृष्टाः। यदि वयम् एतेषां रक्षणविषये सगम्भीरं न चिन्तयेम तर्हि एते कालान्तरे विनष्टाः भवेयुः।

गतशतकस्य मध्यभागे अमेरिकादेशे सर्वेषु भोजनकूटेषु आकर्षणकेन्द्रम् आसीत् 'प्यासेञ्जर पीजियन्' नामकस्य कपोतस्य पाकः। एते कपोताः वृक्षशाखासु निर्मितेषु नीडेषु समूहरूपेण निवसन्ति स्म। मिचिगेन् पेन्सिल्वेनिया इत्यादिषु प्रदेशेषु एकवर्षाभ्यन्तरे सार्धैककोटिकपोताः आहारार्थं मारिताः। १८८८तमे वत्सरे एतेषां कपोतानां वंशः एव नष्टप्रायः। १९१४तमे वत्सरे सिन्सिनारी प्राणिसङ्ग्रहालये एतज्जातीयः अन्तिमः कपोतः अपि मरणं गतः।

एवमेव बहवः अपूर्वाः पक्षिणः पशवः च मानवेन नाशिताः। उपलब्धानाम् आधाराणाम् अनुगुणं एतावति काले १०० पशुजातयः १६० पक्षिजातयः च नाशिताः। इदानीं १००० प्राणिजातयः, २०,००० सस्यजातयः च विनाशपथे सन्ति। एवं विनाशपथे विद्यमानासु जातिषु तिमिङ्गिलाः उल्लेखनीयाः।

पूर्वं क्याबादेशे दक्षिण-अमेरिकादेशे च विशिष्टशिखिनः दार्वाघाटाः प्रसिद्धाः आसन्। येषु वृक्षेषु ते निवसन्ति स्म तेषां वृक्षाणां जातिः एव उन्मूलिता। अतः एते दार्वाघाटाः अपि इदानीं न दृश्यन्ते। बोर्नियोदेशे ओरङ्गुटाङ्ग् नामकाः पुच्छरहिताः वानराः, दक्षिण-अमेरिका देशे जागूवारनामकाः तरक्षवः च पूर्वोक्तायाम् अवस्थायां सन्ति।

अरेबियन् ओरिक्स् नामकानां प्राणिनां संरक्षणार्थम् अरिजोना प्रदेशे पोनिक्स् प्राणिसङ्ग्रहालये निवासव्यवस्था उपकल्पिता अस्ति। विनाशमार्गे स्थितानां हवानीनी जातीयानां बकानां संरक्षणार्थं सर् पीटर् स्काटमहोदयः स्लिम् विज् समीपे व्यवस्थां कृतवान्।







## चित्रशीर्षिका-स्पर्धा  पारितोषिकं ५० -। रूप्यकाणि

**विजितां शीर्षिकां जुलै-८५ मासे प्रकटयिष्यामः।**





❀उपरितनं चित्रद्वयं पश्यन्तु। तस्य युक्तां शीर्षिकां परस्पर-सम्बन्धि–वाक्यद्वयेन लिखित्वा मे-२० दिनाङ्कतः पूर्वम् एव प्रेषयन्तु। अनन्तरम् आगताः शीर्षिकाः न परिशीलयिष्यामः। स्पर्धायां विजेता ५०/ – रूप्यकात्मकं पारितोषिकं प्राप्स्यति। ❀ शीर्षिकाः समपत्रे (पोस्ट्-कार्ड्) लेखनीयाः। तत्र अन्यः विषयः न लेखनीयः। ❀अधोनिर्दिष्ट-सङ्केताय शीर्षिकाः प्रेषणीयाः–

**चन्दमामा (संस्कृतम्)**
**७३/२' अक्षरम्' रङ्गारावूमार्गः, शङ्करपुरम्, बेङ्गलूरु–'५६०००४**

---

**'मार्च' मासस्य चित्रशीर्षिकास्पर्धायाः परिणामः–**

**प्रथमचित्रम्– वारुणीगवेषणा।**

**द्वितीयचित्रम्– वरुणस्य निरीक्षणम्?**

**प्रेषिका– के. हेममालिनी, ६४, १२'सि' मेन्, ६ ब्लाक्, राजाजीनगरम्, बेङ्गलूरु-१०**

## भवन्तः जानन्ति वा? (उत्तराणि)

**१. बोर्नियो २. एबीरिया ३. हैका ४. सायिद् सूयेज् च। ५. अमूदार्या**

Printed by B. V. REDDI at Prasad Process Private Ltd., and Published by B. VISWANATHA REDDI for CHANDAMAMA CHILDREN'S TRUST FUND (Prop. of Chandamama Publications) 188, Arcot Road, Madras-600 026 (India). Controlling Editor: NAGI REDDI.

# कठिनशब्दानां सान्दर्भिकाः अर्थाः।

| | |
|---|---|
| अग्रिमधनम्- | Advance |
| अस्थि- | Bone |
| आञ्चलः- | The end of women's garment |
| आमृष्टवान्- | Stroked |
| आवर्तः- | Whirlpool |
| उच्छृङ्खलः- | Unrestrained |
| उत्पातः- | Deluge |
| उन्नतिः- | Height |
| कन्दुकः- | Ball |
| कपोतः- | Dove |
| कर्तनम्- | Cutting |
| कर्मकरी- | Servant-maid |
| खञ्जरीटः- | Wag-tail |
| खनी- | Mine |
| खल्वाटः- | Bald |
| गौणः- | Subordinate |
| चतुरङ्गम्- | Chess |
| जटा- | Matted lock |
| जानु- | Knee |
| तरक्षुः- | Hyaena |
| दार्वाघाटः- | Wood-pecker |
| दालः- | Pulses |
| दासः- | Slave |
| दैर्घ्यम्- | Length |
| नाणकम्- | Coin |
| नाभिः- | Navel |
| नौकास्थानम्- | Dockyard |
| पूतः- | Purified |
| बकः- | Crane |
| बाष्पम्- | Steam |
| भूरिभोजनम्- | Grand feast |
| मुण्डयित्वा- | Having shaved |
| मृच्छदः- | Tiles |
| वल्मीकः- | Ant-hill |
| वितानः- | Pandal |
| विस्तारः- | Vastness |
| विस्फोटः- | Explosion |
| वृश्चिकः- | Scorpion |
| श्मश्रु- | Beard |
| हलम्- | Plough |

# परीक्षा

| | |
|---|---|
| नागराजः- गोपाल, परीक्षा समाप्ता वा ? | Gopal, are the exams over? |
| गोपालः- आम्, ह्यः एव समाप्ता । | Yes, they concluded just yesterday. |
| ना- परीक्षा कथम् आसीत् ? सम्यक् लिखितवान् वा ? | How were the papers? How have you fared? |
| गो- सामन्यतः आसीत् । उत्तीर्णः तु भविष्यामि । | Not bad, I hope to pass. |
| ना- किं भोः, भवान् एव एवं वदति ? | Is it for you, of all, to say you will just pass! How is it? |
| गो- किं वदामि मम कथां ? परीक्षातः पक्षपूर्वं अहं तीव्रम् अस्वस्थः आसम् । | What can I say? I took ill a fortnight before the examinations. |
| ना- किं ज्वरः वा ? | You had fever? |
| गो- आं, दशदिनानि यावत् ज्वरेण सुप्तः आसम् । अतः विशेषतः किमपि पठितुं न शक्तवान् । | Yes, I had fever and was in bed for 10 days. So, I couldn't study much. |
| ना- तथापि भवान् सदा पठनशीलः किल ? अतः प्रथमश्रेणी लभ्येत एव । | Even then you are ever hardworking, aren't you? You should get a first class. |
| गो- द्रष्टव्यम् । भवतः परीक्षा कदा ? | Let's see, when are you having your exams? |
| ना- आगामिमासस्य अन्त्यभागे । | Next month end. |
| गो- अस्मिन् मासे इति आसीत् किल ? | They were scheduled for this month, weren't they? |
| ना- सत्यम्, किन्तु विद्यार्थिनाम् आन्दोलन–कारणतः व्याक्षिप्ता । | True, but it was postponed because of students' strike. |
| गो- किं निमित्तकम् आन्दोलनम् ? | What was the strike about? |
| ना- निमित्तं किमिति वदामि ? पाठ्यभागः न समापितः इति व्याजः । मार्गदीपाः भञ्जिताः । लोकयानानि दग्धानि । परीक्षा व्याक्षिप्ता आभूत् । | You want to know the reason? What shall I say? They struck because the portions were not completed. Streetlights were broken, buses were burnt. So the examinations were postponed. |
| गो- कालः एव दूषितः । कः वा किं कुर्यात् ? | What can one do? Times are such! |

